## Contents

श्रीमद्वल्लभाचार्यविरचितं
श्रीमद्ब्रह्मसूत्राणुभाष्यम्
प्रथमो अध्यायः
प्रथमः पादः

## अथातो ब्रह्मजिज्ञासा ॥1॥ (1।1।1)जन्माद्यस्य यतः शास्त्रयोनित्वात्॥2॥ (1।1।2)

इदम् अत्र विचार्यते : वेदान्तानां विचारः आरम्भणीयो न वा इति. किं तावत् प्राप्तम्? न आरम्भणीयः इति. कुतः?

साङ्गोऽध्येयस्तथा ज्ञेयो वेदः शब्दाश्च बोधकाः॥
निःसन्दिग्धं तदर्थाश्च लोकवद् व्याकृतेः स्फुटाः॥1॥

अर्थज्ञानार्थं विचारः आरम्भणीयः. तस्य च ब्रह्मरूपत्वात् तज्ज्ञाने पुरुषार्थो भवति इति न मन्तव्यं, विचारं विनापि वेदादेव साङ्गाद् अर्थप्रतीतेः. नच अर्थज्ञानम् अविहितम्, अविचारिताः च शब्दाः न अर्थं प्रत्याययन्ति इति वाच्यं, ज्ञेयश्च इति विधानात्.

"गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः॥
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः"(पाणि.शि.32)

इति बाधोपलब्धिश्च. शब्दः चक्षुरादिवद् न सन्दिग्धार्थप्रतिपादकः. तदर्थश्च व्याकरणादिना निश्चीयते. यथा लौकिकवाक्ये तथा वेदेऽपि. नच तद्विरुद्धं निर्णेतव्यम्, अप्रामाणिकत्वप्रसङ्गात्. तस्माद् वेदार्थज्ञानार्थं विचारो न आरम्भणीयः.

स्याद् एतत्. न वेदार्थज्ञानमात्राय विचारः किन्तु ब्रह्मज्ञानाय, तस्य च आत्मरूपत्वात्, तस्य च अविद्यावच्छिन्नत्वाद्, देहात्मभावदृढप्रतीतेः तदतिरिक्तस्य ब्रह्मणो अभावाद् न वेदमात्राद् असम्भावना-विपिरीतभावना-निवर्तकं ज्ञानम् उत्पद्यते प्रत्युत देहात्मभावदृढप्रतीतेः श्रुतेः उपचरितार्थत्वं स्तुतित्वं वा कल्पयिष्यति इति. मा एवम्.

अलौकिको हि वेदार्थो न युक्त्या प्रतिपद्यते ॥
तपसा वेदयुक्त्या तु प्रसादात् परमात्मनः ॥2॥

नहि स्वबुद्ध्या वेदार्थं परिकल्प्य तदर्थं विचारः कर्तुं शक्यः. ब्रह्म पुनः यादृशं वेदान्तेषु अवगतं तादृशमेव मन्तव्यम् अणुमात्रान्यथाकल्पनेऽपि दोषः स्यात्. "यो अन्यथा सन्तम् आत्मानम् अन्यथा प्रतिपद्यते, किं तेन न कृतं पापं चौरेणात्मापहारिणा" (मनुस्मृ.5। 255), "नैषा तर्केण मतिरापनेया" (कठोप.1।2।9) इति श्रुतेश्च.

नच विरुद्धवाक्यानां श्रवणात् तन्निर्धारार्थं विचारः, उभयोरपि प्रामाणिकत्वेन एकतरनिर्धारस्य अशक्यत्वाद्, अचिन्त्यानन्तशक्तिमतिः सर्वभवनसमर्थे ब्रह्मणि विरोधाभावात् च. अतएव उपनिषत्सु तत्-तदुपाख्याने बोधाभावे औपाधिकबोधे च तपसएव उपदेशः.

नच 'तपः'शब्देन विचारः, तस्य पूर्वानाधिक्यात् तपएव. नच उपाख्यानानां मिथ्यात्वं, तथा सति सर्वत्रैव मिथ्यात्वं भवेद्, विशेषाभावात्. न हि अप्रामाणिकोक्ते विधौ वा उपाख्याने वा ब्रह्मस्वरूपे वा कस्यचिदपि विश्वासो यथा लोके. तस्माद् वेदे अक्षरमात्रस्यापि असत्यार्थ(ज्ञान)स्य अभावाद् वैदिकानां न सन्देहोऽपि, किं पुनः विरुद्धार्थकल्पना.

विद्यासु च तदश्रुतेः. यदि वेदार्थज्ञाने विचारस्य उपयोगः स्यात्, अङ्गत्वेन व्याकरणस्येव विद्यासु श्रवणं स्यात्.

स्वातन्त्र्ये च पुराणादेरिव मीमांसायापि प्रकारभेदेन प्रतिपादकत्वं स्यात्. "तन्तु औपनिषदं पुरुषं पृच्छामि" (बृहदा.उप.3।9।26) इति तु तेषां निषेधः. अन्यथाज्ञानं न उपनिषदुक्तं फलं समर्पयति, तस्माद् न आरम्भणीयएव ब्रह्मविचारः. अनेन धर्मविचारोऽपि आक्षिप्तएव. नहि एतद् निराकर्तुः सो अयम् अतिभारः इति पूर्वः पक्षः.

सिद्धान्तस्तु ः

सन्देहवारकं शास्त्रं बुद्धिदोषात् तदुद्भवः॥
विरुद्धशास्त्रसम्भेदाद् अङ्गैश्चाशक्यनिश्चयः॥।3॥
तस्मात् सूत्रानुसारेण कर्तव्यः सर्वनिर्णयः॥
अन्यथा भ्रश्यते स्वार्थाद् मध्यमश्च तथादिमः॥4॥

परम्परया पाठवद् अर्थस्यापि गुरुमुखादेव श्रवणेऽपि मन्द-मध्यमयोः सन्देहो भवेत् समानधर्मदर्शनात् पदादिपाठवत्. तत्र यथा लक्षणानाम् उपयोगः एवमेव मीमांसायापि. तदुक्तं

असन्दिग्धेऽपि वेदार्थे स्थूणाखननवन् मतः॥
मीमांसानिर्णयः प्राज्ञे दुर्बुद्धेस्तु ततो द्वयम्॥5॥

तथाच निर्णये येन-केनचिद् वक्तव्ये हरिः स्वयं व्यासो विचारं चिकीर्षुः तत्कर्तव्यतां बोधयति "ब्रह्मजिज्ञासा कर्तव्या" इति व्यासोक्तत्वादपि कर्तव्यता.

'कर्तव्य'पदाध्याहारे स्वातन्त्र्यं न भवति. अन्यथा "अथ योगानुशासनम्"(योगसू.1।1) इतिवत् स्वतन्त्रता स्यात्. तथाच ज्ञानानुपयोगः. तथाहि "तन्तु औपनिषदं पुरुषं पृच्छामि" (बृहदा.उप.3।9।26) इति केवलोपनिषद्वेद्यं ब्रह्म, न शास्त्रान्तरवेद्यम्. तद् यदि मीमांसा स्वतन्त्रा स्यात् तज्जनितं ज्ञानं न ब्रह्मज्ञानं भवेत्.

अथवा अध्याहारकरणापेक्षया 'अथ'शब्दएव अधिकारे व्याख्येयः. वेदाध्ययनानन्तर्यन्तु सिद्धमेव. नहि अनधीतएव विचारम् अर्हति. तत्र एतत् स्यात्. स्वतन्त्रता इति, तत्र प्रतिविधास्यामः. वेदार्थब्रह्मणो वेदानुकूलविचारः इति. किम् अत्र युक्तम्? व्याख्यानम् इति, व्याख्यानतो विशेषप्रतिपत्तेः. यथा कर्मणि दर्शपूर्णमासौतु पूर्वं व्याख्यास्यामः "अथातो दर्शपूर्णमासौ व्याख्यास्यामः" (आप.श्रौ.सू.1।1) इति. अथवा एतर्हि इमानि सिध्यन्ति प्रयोजनानि. अधिकाकांक्षा न भवेत्. अध्याहारश्च पुरुषार्थश्च सिध्येद्, उच्छेदश्च न भवेद् इति. कथम्? 'अथ'शब्दो अर्थचतुष्टये वर्तते ः 1मङ्गले 2अधिकारे 3आनन्तर्ये 4अर्थान्तरोपक्रमे च. तत्र श्रुतिमात्रेणैव मङ्गलसिद्धेः अर्थान्तरस्य च पूर्वोक्तस्य अभावाद् न अत्र तत्कल्पनम्. अथ अवशिष्यते आनन्तर्ये वा अधिकारे वा इति.

आनन्तर्येतु अध्ययनस्य स्वतःसिद्धत्वाद् अधिकाकांक्षा भवति. तथा सति तदभावाद् न विचारः सिध्येत्.

तथाहि, न तावद् धर्मविचारानन्तर्यम्, विपर्ययसम्भवात्. नच पाठतो नियमः. तत्रापि तथा. नच आचाराद् व्यवस्था, तत्रापि अनियमसम्भवात्, प्रत्यवायाश्रवणात्. सम्भवेऽपि न वक्तव्यत्वम् अध्ययनवत्. तथाच ततोऽपि आकाङ्क्षा भवेत्. नच वैराग्य-शम-दमादिः पूर्वसिद्धः. तेषामेव अभावात्. नच यदैव सम्भवः तदैव तत् कर्तव्यम् इति वाच्यं तदसम्भवापत्तेः. तथाहि. ब्रह्मणः परमपुरुषार्थत्वे ज्ञाते तज्ज्ञानस्यैव साधनत्वे अवगते, तच्छेषत्वे च यागादीनाम् अवगते, तदर्थकर्मकरणे चित्तशुद्धौ सत्यां वैराग्यादि. इदं च वेदान्तविचार-व्यतिरेकेण न भवति इति अन्योन्याश्रयः.

निर्धारितेतु वेदान्ते विचारो व्यर्थएव. नच साक्षात्कारः तत्फलम्, तस्य शब्दशेषत्वेन तत्कल्पनायां प्रमाणाभावात्. "दशमः त्वम् असि" इत्यादौ प्रत्यक्षसामग्रा बलवत्त्वाद् देहादेः प्रत्यक्षत्वात् स्वदेहमपि पश्यन् "दशमो अहम्" इति मन्यते. न तथा प्रकृते. मनननिदिध्यासनविधीनाम् आनर्थक्यप्रसङ्गात्.

नच अधिकारिभेदः कल्पनीयः, शब्दज्ञाने तत्कल्पनायां प्रमाणाभावात्. अत्यन्तासत्येऽपि अर्थे शब्दस्य ज्ञानजननात् प्रमाणसङ्करापत्तिश्च. मनसा तज्जननेऽपि तथा.

तस्मात् प्रथमं शाब्दमेव ज्ञानम् इति मन्तव्यम्, अनुभवसिद्धत्वात्, इदानीन्तनानामपि शमादिरहितानां निर्विचिकित्सित-वेदार्थज्ञानोपलब्धेः, संन्यासानुपपतिश्च.

किञ्च, अध्याहारश्च कर्तव्यः. सच 'कर्तव्या'दिपदानाम्. यदि तत् स्वार्थं, व्यर्थमेव वाक्यं स्यात्. परार्थत्वेतु अशक्यम्. नहि तैः विचारः कर्तुं शक्यते. स्वकृतिवैयर्थ्यं च. असङ्गतिश्च अस्य सूत्रस्य भवेत्.

किञ्च, अधिकारपक्षे पुरुषार्थः सिध्यति, न आनन्तर्यपक्षे उक्तन्यायात्. किञ्च, तादृशस्य अधिकारिणः श्रवणमात्रेण कृतार्थस्य समाधिनिरतस्य प्रवचनासम्भवात् शास्त्रोच्छेदः शास्त्रविरोधश्च. साधनानाम् अग्रे स्वयमेव वक्तव्यत्वात्. अतो अनेकदोषदुष्टत्वाद् अधिकारार्थएव श्रेयान्.

नच ज्ञातुम् इच्छा जिज्ञासा न अधिकर्तुं शक्या इति वाच्यं, 'जिज्ञासा'पदस्य विचारार्थत्वात्. अतएव "जिज्ञासितुम् इच्छेद्" इति पुराविदां वचनानि. 'जिज्ञासा'पदेन च एतज् ज्ञापयति. ब्रह्मज्ञानं पुरुषार्थसाधनत्वाद् इष्टम्. तदिच्छापूरणाय विचारो आरभ्यते इति. यस्मात् कर्मादिभ्यो ज्ञानमेव पुरुषार्थसाधनम् इत्यतः तज्ज्ञानाय विचारो अधिक्रियते इति 'अतः'शब्दार्थः.

अधिकारीतु त्रैवर्णिकएव. नहि वेदविचारस्य वेदाधिकार्यतिरिक्तः शक्यते कल्पयितुम्. नहि मन्दमतेः वेदो न आयाति इति त्रैवर्णिके मतिमत्त्वम् अधिकारिविशेषणं कल्प्यते. अन्धपङ्ग्वादीनामिव कर्मणि गृहाद्यासक्तस्य मननाद्यसम्भवात् साक्षात्कारो न भविष्यति.

नच धर्मन्यायेन गतार्थत्वम् अस्य, अप्रतिज्ञानाद् अनुपलब्धेश्च. नच जगत्कारणं परमात्मा वा प्रकृतिः वा परमाणवो वा इति सन्देहे किञ्चिद् अधिकरणम् अस्ति.

स्याद् एतत्. "अथातो धर्मजिज्ञासा" (जैमि.सू.1।1।1) इति धर्मविचारं प्रतिज्ञाय नोदकवाक्यार्थस्य धर्मत्वम् उक्त्वा प्रामाण्यपुरःसरं सर्वे सन्देहाः निवारिताः. तत्र ब्रह्मज्ञानस्यापि धर्मत्वम्.

"आत्मा इत्येव उपासीत" (बृहदा.उप.1।4।7)

"आत्मानं श्लोकम् उपासीत" (बृहदा.उप.1।4।15)

"तद् ब्रह्म इति उपासीत" (तैत्ति.उप.3।10।4)

"आत्मा वा अरे द्रष्टव्यः" (बृहदा.उप.2।4।5)

इत्यादिनोदनावाक्यार्थत्वात्.

“अयं हि परमो धर्मो यद् योगेन आत्मदर्शनम्” (याज्ञ.स्मृ.1।8) इति स्मृतेश्च. सृष्ट्यादिवाक्यानान्तु अर्थवादत्वम्, आरोपापवादविषयधर्म-प्रतिपादकत्वेन विधेयोपासनाविषयस्तावकत्वात्.

नच ज्ञानादीनाम् अविधेयत्वं, प्रमाणवस्तुपरतन्त्रत्वेन आकृतिसाध्यत्वाद् इति वाच्यम्. नहि सर्वात्मना असाध्यम्. प्रकारभेदस्तु अप्रयोजकः. सर्वस्यापि कारणेषु पुरुषव्यापृतिः. तद् अत्र वृत्तिसम्पादने प्रमाणासम्पादने वा पुरुषकृतिसाध्यत्वम्. अन्यथा सिद्धान्तेऽपि मननादिशा-स्त्रवैफल्यापत्तेः. साधनप्रतिपादक-श्रुतिविरोधश्च. येनापि सर्वक्रियाफलत्वं निराकार्यं तेनापि गुरूपसत्त्यादिना यतितव्यमेव ज्ञानार्थे. तस्माद् यत्रापि विध्यश्रवणं तत्रापि विधिं परिकल्प्य तत्रत्यानां तच्छेषत्वं कल्प्यमिति न अर्थो अनया मीमांसया. अन्यथा विरोधोऽपि.

स्याद् एतत्. ब्रह्मविचारएव आरम्भणीयो, न धर्मविचारः. सर्ववेदव्यासकर्त्रा वेदव्यासेन अकृतत्वात् तुच्छफलत्वाच्च. कल्पोक्तप्रकारेण निःसन्दिग्धं करण-सम्भवाच्च, आचारपरम्परयापि करणसम्भवाच्च. एतर्ह्यपि सन्देहे सूत्रभाष्य-याज्ञिकानामेव अनुवृतिः क्रियते, न मीमांसकस्य. तस्मात् साङ्गवेदाध्येतुः निःसन्देह-करणसम्भवाद् न पूर्वयापि कृत्यम्.

किञ्च, परमकृपालुः वेदः संसारिणः संसाराद् मोचयितुं कर्माणि चित्तशुध्यर्थं बोधितवान् इति कूपे अन्धपातनवद् अप्रामाणिकत्वभिया अवसीयते. विपरीत-बोधिकातु पूर्वमीमांसा तस्मादपि न कर्तव्या इति.

मा एवम्. किं विचारमात्रं न कर्तव्यं, पूर्वकाण्डविचारो वा.

न आद्यः, तुल्यत्वात् समर्थितत्वाच्च.

द्वितीये सामान्यन्यायेन सन्देहे निवार्ये लक्षणवत् तदुपयोगः. अनिष्टतया निरूपणं न मीमांसादोषः किन्तु विचारकाणां स्वभावभेदात्.

किञ्च. आवश्यकत्वादपि निवृत्तानामपि यागादिज्ञानस्य आवश्यकत्वं चित्तशुद्ध्यर्थत्वात्. परमाश्रमभेदेन प्रकारभेदः कायिकादिभेदात्. तत्र आद्यस्य वाचिको द्वितीय-तृतीययोः कायिकः चतुर्थस्य मानसिकः इति आश्रमिणाम्. तस्माद् एकेनैव चरितार्थत्वात् किं द्वितीयेन? इति प्राप्ते. उच्यते. उपासनायाः धर्मत्वेऽपि न ब्रह्मणो धर्मत्वम्, ज्ञानरूपत्वात्, धर्मस्य च क्रियारूपत्वात्.

नच अर्थवादानां धर्मइव ब्रह्मणि उपयोगः कर्तुं शक्यः, उत्पत्तिप्रकारफलभेदानाम् अभावात्. प्रकृतेतु माहात्म्यज्ञानार्थं तदुपयोगः. तस्य च ज्ञानोपयोगो यथा तथा वक्ष्यते चतुर्थे. ‘उपासना’-‘दर्शना’दिपदानां मनोव्यापारत्वमेव. विचारस्यापि यथा ज्ञानोपयोगित्वं तथा अग्रे वक्ष्यते.

किञ्च, औपनिषदज्ञानस्यापि कर्मोपयोगित्वं “यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवति” (छान्दो.उप.1।1।10) इति. अतएव ब्रह्मविदामेव

जनकादीनां कर्मणि सर्वदेवसान्निध्यम्. अन्यथा आभासत्वमेव.

नच ब्रह्मरूपात्मविज्ञाने देहाद्यध्यासाभावेन कर्तृत्वाभावात् कर्मानधिकारः इति वाच्यम्. निरध्यस्तैरेव देहादिभिः कर्मकरणसम्भवात्. अतएव जीवन्मुक्तानां सर्वे व्यापाराः. तथाच स्मृतिः

नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्।
पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् स्वपन् श्वसन्॥
प्रलपन् विसृजन् गृह्णन् उन्मिषन् निमिषन्नपि।
इन्द्रियाणि इन्द्रियार्थेषु वर्तन्त इति धारयन्॥
ब्रह्मणि आधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।
लिप्यते न स पापेन पद्मपत्रम् इव अम्भसा॥
(भग.गीता 5।8-10) इति.

अतो ब्रह्मविदामेव कृतं कर्म शुभफलं भवति. अतो धर्मविचारकाणामपि ब्रह्म जिज्ञास्यमेव. तस्माद् न गतार्थत्वानुपयोगौ.

ननु फलप्रेप्सुः अधिकारी. फलञ्च विचारस्य शाब्दं ज्ञानं, तस्य मननादिद्वारा अनुभवः, तस्य च अनर्थनिवृत्तिपूर्वकपरमानन्दावाप्तिः. तथाच विरक्तो अनर्थजिहासुः परप्रेप्सुश्च अधिकारी कस्माद् न भवति "शब्दब्रह्मणि निष्णातो न निष्णायात् परे यदि, श्रमस्तस्य फलं मन्ये ह्यधेनुमिव रक्षतः" (भाग.पुरा.11।11।18) इति भगवद्वचनात् केवलस्य निन्दाश्रवणात् इति चेत्, न, फलकामनायाः अनुपयोगात्, अन्येनैव तत्समर्पणात्. नित्यत्वादपि अर्थज्ञानस्य न फलप्रेप्सुः अधिकारी. निन्दार्थवादस्तु मननादिविधिशेषः इति मन्तव्यम्.

ननु ब्रह्मणो विचारे प्रतिज्ञाते विरोधनिराकरणादीनाम् अप्रतिज्ञातार्थत्वम्. नच अवक्तव्यत्वं निर्विचिकित्सज्ञानानुदयप्रसङ्गाद् इति चेद्, न, 'ब्रह्मणः' इति न कर्मणि षष्ठी, किन्तु शेषषष्ठी. तथाच ब्रह्मसम्बन्धि तज्ज्ञानोपयोगि सर्वमेव प्रतिज्ञातं वेदितव्यम्. नच गौणतापत्तिः अजिज्ञास्यत्वञ्च स्याद् इति वाच्यम्, ब्रह्ममात्रे सन्देहाभावात्. सन्दिग्धस्यैव जिज्ञास्यता. गौणत्वन्तु शब्दतएव, नतु अर्थतः.

वेदप्रामाण्यन्तु प्रतितन्त्रसिद्धत्वाद् न विचार्यते. तस्माद् ब्रह्म जिज्ञासितव्यम् इति सिद्धम्.

इति प्रथमाध्याये प्रथमपादे प्रथमं जिज्ञासाधिकरणम्॥1॥

किञ्च, तत्र किं लक्षणं, किं प्रमाणकम् इति जिज्ञासायाम् आह सूत्रकारः

## जन्माद्यस्य यतः शास्त्रयोनित्वात्॥2॥ (1।1।2)

ननु कथम् अत्र सन्देहो यावता "सत्यं ज्ञानम् अनन्तं ब्रह्म" (तैत्ति.उप. 2।1) इति आह श्रुतिरेव. विरुद्धं च एतत्. स्वरूपलक्षणाकथने कार्यलक्षणस्य वक्तुम् अशक्यत्वात् विवादाध्यासितत्वाच्च. न हि ब्रह्मणो जगत्कर्तृत्वं सर्वसम्मतम्. नच आगमोदितमिति वेदमात्रस्य ब्रह्मप्रमाणकत्वं वक्तुं शक्यते.

किञ्च, व्यर्थश्च एवं विचारः. लक्षणप्रमाणाभ्यां हि वस्तुज्ञानं भवति. तच्च स्वरूपलक्षणेनैव भवति इति किम् अनेन. तस्माद् अयुक्तम् उत्पश्यामः इति. उच्यते.

सन्देहवारकं शास्त्रं वेदप्रामाण्यवादिनाम्।
क्रियाशक्तिज्ञानशक्ति सन्दिह्योते परस्थिते॥6॥

न हि श्रुतिं व्याख्यातुं प्रवृत्तः सूत्रकारः किन्तु सन्देहं वारयितुम्. तत्र "सत्यं ज्ञानमनन्तम्" (तैत्ति.उप.2।1), "नित्य-शुद्ध-मुक्त-स्वभावम्" (नृसिं. ताप.उप.9) इति श्रुत्या कर्तृत्वादिप्रापञ्चिकधर्मराहित्यं प्रतीयते. "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति" (तैत्ति.उप.3।1) इति कर्तृत्वञ्च.

तत्र सन्देहः : किं ब्रह्म कर्तृ, आहोस्विद् अकर्तृ? किं तावत् प्राप्तम्? अकर्तृ. कथम्? "ब्रह्मविदाप्नोति परम्" (तैत्ति.उप.2।1) इति प्रधानवाक्यम्, फलसम्बन्धात्. ऋचापि विवृतं "सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" (तैत्ति.उप. 2।1) इति. फलार्थं च ब्रह्मज्ञानम्. फलञ्च फलवाक्योक्त-धर्मज्ञानादेव, न अन्यथा. कर्तृत्वञ्च परविवरणतया उक्तम्. परं किम् इति उक्ते यः सर्वान्तरः आनन्दः इति. कथं सर्वान्तरम्? इति आकांक्षायां परिचयार्थं भूत-भौतिकसृष्टिम् उक्त्वा गौणानन्तर्यं परिहृतम्. गौणोपासनाफलञ्च प्रधानशेषतया उक्तम्. तत्र अन्यगतकर्तृत्वारोपानुवादोऽपि सम्भवति. ततश्च "भृगुर्वै वारुणिः" (तैत्ति. उप.3।1) इति उपाख्यानेऽपि परिचायकत्वाद् गौणकर्तृत्वमेव अनूद्यते, फलाश्रवणाद् इति पूर्वः पक्षः.

सिद्धान्तस्तु

उत्पत्ति-स्थिति-नाशानां जगतः कर्तृ वै बृहत्॥
वेदेन बोधितं तद्धि नान्यथा भवितुं क्षमम्॥7॥
नहि श्रुतिविरोधोऽस्ति कल्पोऽपि न विरुध्यते॥
सर्वभावसमर्थत्वाद् अचिन्त्यैश्वर्यवद् बृहत्॥8॥

वेदेनैव तावद् जगत्कर्तृत्वं बोध्यते. वेदश्च परमाप्तो अक्षरमात्रमपि अन्यथा न वदति. अन्यथा सर्वत्रैव अविश्वासप्रसङ्गात्. नच कर्तृत्वे विरोधो अस्ति सत्यत्वादिधर्मवत् कर्तृत्वस्यापि उपपतेः. सर्वथा निर्धर्मकत्वे सामानाधि-करण्यविरोधः. 'सत्य'-'ज्ञाना'दिपदानां धर्मभेदेनैव तदुपपतेः. नच कर्तृत्वं संसारिधर्मो, देहाद्यध्यासकृतत्वाद् इति वाच्यम्. प्रापञ्चिके कर्तृत्वे तथैव नतु अलौकिककर्तृत्वे. अतएव 'अस्य' इति आह. 'अस्य' इति पुरोवर्ति प्रपञ्चः इदमा निर्दिश्यते. अनेकभूतभौतिक-देवतिर्यङ्मनुष्यानेकलोकाद्भुतरचनायुक्त-ब्रह्माण्डकोटिरूपस्य मनसापि आकलयितुम्

अशक्यरचनस्य अनायासेन उत्पत्तिस्थितिभङ्गकरणं न लौकिकम्. प्रतीतञ्च निषेध्यं, न अप्रतीतं, न श्रुतिप्रतीतम्. सत्यत्वादयश्च लौकिकाः ततः सर्वनिषेधे तदज्ञानमेव भवेत्. नच सत्यत्वादिकं लोके नास्त्येव व्यवहारमात्रत्वात्, कारणगतमेव सत्यत्वं प्रपञ्चे भासते इति वाच्यम्. तर्हि कर्तृत्वं तथा कुतो न अङ्गीक्रियते? स्मृतिश्च स्वीकृता भवति "कर्ता कारयिता हरिः" इति.

नच आरोपन्यायेन वक्तुं शक्यं तथा सति अन्यस्य स्यात्. तत्र न प्रकृतेः, अग्रे स्वयमेव निषिध्यमानत्वात्. न जीवानाम् अस्वातन्त्र्यात्. नच अन्येषाम् उभयनिषेधादेव. तस्माद् ब्रह्मगतमेव कर्तृत्वम्. एवं भोक्तृत्वमपि. नवा काचित् श्रुतिः कर्तृत्वं निषेधति. विरोधभानात् कल्प्यातु लौकिकपरा. फलवाक्येऽपि अश्रुतानां गुणोपसंहारः कर्तव्यः. तथाच अयं सूत्रार्थः. जन्मः आदिः येषाम् इति अवयवसमासाद् अतद्‌गुणसंविज्ञानो बहुव्रीहिः.

अथवा जन्मप्रभृति सर्वे भावविकाराः 'आदि'शब्देन गृह्यन्ते. तथाच जन्मश्च आदिश्च इति एकवद्भावः. 'आदि'शब्दश्च धर्मवाची. स च स्वसम्बन्धिनं लक्षयति. तस्य उभयसापेक्षत्वाद् उत्पत्तेः विद्यमानत्वाद् अन्यानेव भावविकारान् उपलक्षयति इति 'आदि'शब्देन अन्ये भावविकाराः.

अथवा जन्मनो न आदित्वं, तदाधारस्य पूर्वम् अविद्यमानत्वात्. अन्येतु आदिमन्तः, तदाधारस्य पूर्वं विद्यमानत्वात्. अतः 'आदि'शब्दः स्वाधारसद्धर्म-वाची तद्धर्माणाम् उपलक्षकः. अथवा गमन-प्रवेशयोः भेदाद् जन्म आदिः येषाम् इति जात्यपेक्षया एकवचनम्. जन्मतु श्रुतत्वात् सिद्धम्.

अथवा किम् अनया कुसृष्ट्या. जन्म आद्यस्य आकाशस्य यतः इति. "तस्माद् वा एतस्माद् आत्मनः आकाशः सम्भूतः" (तैत्ति.उप.2।1) इत्येव विचार्यते फलसम्बन्धित्वात्. तेन एकत्र सिद्धः शास्त्रार्थः प्रकारान्तरेऽपि "यतो वा इमानि भूतानि" (तैत्ति.उप.3।1) इति अत्र विस्फुलिङ्गवत् सर्वोत्पत्तिः, अत्रतु क्रमेण इति विशेषः. एतेन सर्वएव प्रकाराः सूचिताः वेदितव्याः. ब्रह्मविचारे ब्रह्मणोऽपि अधिकृतत्वाद् ब्रह्म इति आयाति नतु अध्याहारः. शास्त्रे योनिः शास्त्रयोनिः. शास्त्रोक्त-कारणत्वाद् इति अर्थः. शास्ति इति शास्त्रं वेदः. सामान्यग्रहणं पूर्वकाण्डे पूर्वसृष्टिवाक्यानां सङ्ग्रहार्थं. यथा अस्यैव कारणत्वं, न अन्यस्य तथा उपरिष्टाद् वक्ष्यामः. मतान्तरवद् जन्मादीनां न विकारित्वं किन्तु आविर्भावतिरोभावावेव, तथोत्तरत्र वक्ष्यते तदनन्यत्वाधिकरणे (ब्रह्मसू.2।1। 15) नामलीलायापि न पृथग् निरूपणं प्रपञ्चमध्यपातात्.

केचित् पृथग्रूपनामप्रपञ्चकर्तृत्वं योगविभागेन प्रतिज्ञाय समन्वयादि-सूत्रेष्वेव हेतून् वर्णयन्ति. अन्वयसिध्यर्थं च अतति व्याप्नोति इति अत्. शास्त्रे योनित्वं प्राप्तं तद् इति, न एतत् सूत्रकारसम्मतम् इति प्रतिभाति.

तस्मात् सर्वज्ञत्वं सर्वशक्तिमत्वञ्च सिद्धं निरङ्कुशजगत्कर्तृत्वेन.

ननु न सर्वो वेदो ब्रह्मणो जगत्कर्तृत्वे मानं, तपोयज्ञादियुक्तप्रजापतिप्रभृतीनामेव जगत्कारणत्वस्य पूर्वकाण्डे तत्तदुपाख्यानेषु अवगम्यमानत्वात्. नच अवान्तरकारणत्वं, परस्य अश्रवणात्. उत्तरकाण्डेतु द्वयप्रतिपादनाद् विरोधः सन्देहश्च. मीमांसायाः सन्देहनिवारकत्वेऽपि एकांशस्य अप्रामाण्यं स्यात्. उभयसमर्थने शास्त्रवैफल्यं वा. वेदप्रामाण्यादेव तत्सिद्धेः. बाधितार्थवचनं वेदे नास्ति इति अवोचाम.

किञ्च, वेदान्ताः किं वेदशेषा, वेदा वा? न आद्यः, अनुपयोगात्. अनारभ्याधीतत्वेन तदुपयोगित्वे पूर्वकाण्डविचारेणैव गतार्थत्वम्, विद्याप्रवेशश्च. न द्वितीयः, यज्ञाप्रतिपादनाद् मन्त्रब्राह्मणत्वाभावाच्च. तस्माद् वेदोषरा वेदान्ताः इति तेषां किं स्यात्? इति चेद्, मा एवम्. अस्ति तावद् वेदत्वम् अध्ययनादिभ्यः स्मरणाच्च. प्रमाणं च सर्वोऽपि वेदः स्वार्थे. सच न यज्ञश्चेद् ब्रह्म भवतु. नच एतावता अवेदत्वम्, अतिप्रसङ्गात्. शक्यते हि अग्निहोत्रादीनाम् अन्यतरदनन्तर्भाव्यः तथा वक्तुम्. तस्माद् ब्रह्मापि प्रतिपादयन्तो वेदान्ता वेदत्वं न व्यभिचरन्ति इति. मन्त्रब्राह्मणरूपत्वञ्च उत्पश्यामः. ऋगेव मन्त्रः ब्रह्मप्रतिपादकं ब्राह्मणं, तच्छेषाः सृष्ट्यादिप्रतिपादकाः. यद्यपि न विधीयते, तथापि तादृशमेव ज्ञानं फलाय इति युक्तम् उत्पश्यामः. पूर्ववैलक्षण्यन्तु भूषणाय.

काण्डद्वयस्य अन्योन्योपकारित्वाय साधारणग्रहणम्. "यदेव विद्यया करोति"(छान्द.उप.1।1।10) इत्यादिना पूर्वशेषत्वं सर्वस्य. "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" (बृहद्.उप.4।4।22) इत्यादिना सर्वस्य उत्तरशेषत्वम्. कर्मब्रह्मणोः क्रियाज्ञानयोः धर्मिपरत्वेन ऐक्यात् कर्तृवाक्येषु सर्वत्र न विरोधः. तस्मात् शास्त्रयोनित्वं सिद्धम्.

केचिद् अत्र 'जन्मा'दिसूत्रं लक्षणत्वाद् अनुमानम् इति वर्णयन्ति. अन्ये पुनः श्रुत्यनुवादकम् आहुः. सर्वज्ञत्वाय श्रुत्यनुसार्यनुमानं च ब्रह्मणि प्रमाणम् इति. तत्तु, "तन्त्वौपनिषदं पुरुषं पृच्छामि" (बृहद्.उप.3।9।26) इति केवलोपनिषद्वेद्यत्वाद् उपेक्ष्यम्, अनधिगतार्थगन्तृत्वात् प्रमाणस्य. मनन-निदिध्यासनयोः श्रवणाङ्गत्वम्. सन्देहवारकत्वात् शास्त्रस्यापि तदङ्गत्वम् इति॥2॥

इति प्रथमाध्याये प्रथमपादे द्वितीयं जन्माद्यधिकरणम्॥2॥

तत्र एतत् स्यात्. तत्र किं समवायि निमित्तं कर्तृ वा किम् अतो यदि एवम्? एवम् एतत् स्यात्. यदि एकमेव स्यात् तदा क्रिया-ज्ञानशक्त्योः निरतिशयत्वं भज्येत, मृदादिसाधारण्यं च स्यात् मतान्तरवत्. कथम् एवं सन्देहो यावता "यतो वा इमानि" (तैत्ति.उप.3।1) इत्यादिभ्यो निःसन्देहश्रवणात्. एवं हि सः. पञ्चमी श्रूयते यतः इति. पञ्चम्याः तसिल् इति. 'आत्मनः' इत्यपि पञ्चमी, निमित्तत्वे न सन्देहः, पञ्चम्याः निमित्तत्व-कथनात्. उपादानत्वे कर्तृत्वे च सन्देहः, तद्वाचकाश्रवणात्, कल्पनायां प्रमाणाभावात्. समवायित्वे पुनः सुतरां सन्देहः. एवं प्राप्ते आह

## तत्तु समन्वयात् ॥3॥ (1।1।3)

‘तु’शब्दः पूर्वपक्षव्यावृत्त्यर्थः. निमित्तत्त्वस्य श्रुतिसिद्धत्वाद् मतान्तरनिराकरणत्वेन अग्रे वक्ष्यते. तद् ब्रह्मैव समवायि कारणम्. कुतः? समन्वयात्, सम्यग् अनुवृत्तत्वात्. अस्ति-भाति-प्रियत्वेन सच्चिदानन्दरूपेण अन्वयाद्, नामरूपयोः कार्यरूपत्वात्. प्रकृतेरपि स्वमते तदंशत्वात्. अज्ञानात् परिच्छेदाप्रियत्वे. ज्ञानेन बाधदर्शनात्. नानात्वन्तु ऐच्छिकमेव जडजीवान्तर्यामिष्वेव एकैकांशप्राकट्यात्. कथम् एवम्? इति चेद्, न, सद्रूपे घटरूपक्रियासु इव तारतम्येन आविर्भाववद् जडेऽपि भानत्वादिप्रतितेः तारतम्येन आविर्भावो अङ्गीकर्तव्यः. भगवदिच्छायाः नियामकत्वात्. नच साधारण्येन सर्वजगत्प्रति परमाण्वादीनाम् अन्वयः सम्भवति. एकस्मिन् अनुस्यूते सम्भवति इति अनेककल्पनायाः अन्याय्यत्वात्. लोके कर्तृविशेषवद् उपादानविशेष-ग्रहणेऽपि न ब्रह्मणि व्यभिचारः. अलीकप्रतीतेः अस्तित्वादिप्रतीतावपि सम्यग् अन्वयाभावाद् न कार्यत्व-व्यभिचारौ. तस्माद् ब्रह्मणएव समवायित्वम्.

एतत् सर्वं श्रुतिरेव आह “स आत्मानं स्वयमकुरुत” (तैत्ति.उप.2।7) इति. निमित्तत्वन्तु स्पष्टमेव सर्ववादिसम्मत्. केचिद् अत्र शास्त्रयोनित्व-पूर्वपक्षनिराकरणाय “तत्तु समन्वयात्” (ब्रह्मसू.1।3) इति योजयन्ति.

तत् पूर्वपक्षसिद्धान्तयोः द्वयोरपि असङ्गतत्वाद् उपेक्ष्यम्. तथाहि. जैमिनिः धर्मजिज्ञासामेव प्रतिज्ञाय तत्प्रतिपादकस्य पूर्वकाण्डस्य समन्वयम् आह. अवान्तरवाक्यानां प्रकारशेषत्वात्. नच सर्वस्मिन् वेदे धर्मएव जिज्ञास्यः, तद्‌गुरुणैव व्यासेन ब्रह्मजिज्ञासायाः प्रतिज्ञातत्वात्. सन्देहमात्रवारकत्वाद् जिज्ञासयोः नतु अलौकिकार्थसाधकत्वम्. तथा सति वेदानाम् अन्याधीनत्वेन अप्रामाण्यं स्यात्. ‘वेदजिज्ञासा’ इत्येव उक्तं स्यात्.

किञ्च,

साधनं च फलञ्चैव सर्वस्याह श्रुतिः स्फुटम्।
न प्रवर्तयितुं शक्ता तथा चेन्नरको नहि॥9॥
प्रवर्तकस्तु सर्वत्र सर्वात्मा हरिरेव हि।
यज्ञएव हि पूर्वत्र बोध्यते स्वर्गसिद्धये॥10॥
सिद्धएव हि सर्वत्र वेदार्थो वेदवादिनाम्।
मन्त्राणां कर्मणाञ्चैव दर्शनश्रवणाच् छ्रुतौ॥
कृतिश्च सिद्धतुल्यत्वं वेदः स्वार्थेच सन्मतः॥11॥

“प्रजापतिरकामयत प्रजायेय इति स एतद् अग्निहोत्रं मिथुनम् अपश्यत्” ()
“प्रजापतिः यज्ञान् असृजताग्निहोत्रं च अग्निष्टोमं च पौर्णमासीं च उक्थ्यं च अमावास्यां च अतिरात्रं च तानुदमिमीत यावदग्निहोत्रम् आसीत् तावान् अग्निष्टोमः” (तैत्ति.संहि.1) इत्यादि.

नहि उपाख्यानानां मिथ्यार्थत्वं बुद्धजन्मनः पुरोक्तं युक्तं वा. तथा सति वेदानाम् अप्राण्यमेव स्यात्. मिथ्योपाख्यानप्रतिपादकलोकवत्. तस्मात् पूर्वमीमांसानभिज्ञाः क्रियापरत्वं सर्वस्यापि वेदस्य वदन्तो मूर्खाएव.

उत्तरवादिनोऽपि पूर्वज्ञानम् अङ्गीकृत्य पूर्वानुपयोगित्वं ब्रह्मज्ञानस्य वदन्तो वेदानभिज्ञाएव. "यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवति" (छान्दो.उप.1।1।10) इति उपनिषज्ज्ञानस्य श्रुतिसिद्धैव कारणता. नच बाधितत्वात् त्यज्यते इति वाच्यं, ब्रह्मात्मज्ञानवतएव वसिष्ठादेः यज्ञाधिकारात्. नच एवं किम् अनेन इति वाच्यम्, इत्थम्भूतत्वाद् यज्ञस्य.

किञ्च, कर्मफलवत् ब्रह्मफलस्यापि लौकिकत्वात्. "य एवं वेद प्रतितिष्ठति, अन्नवानन्नादो भवति महान् भवति प्रजया पशुभिर् ब्रह्मवर्चसेन महान् कीर्त्या" (तैत्ति.उप.3।6) इति अत्यन्ताविद्यावतो यज्ञानधिकारात् तन्निषेधार्थं ज्ञानम् उपयुज्यते. नच देहाध्यासस्य कारणत्वम्, "ब्रह्मार्पणं ब्रह्महविः" (भग.गीता 4।24) इत्यादिस्मृतेः. तस्माद् अन्योन्योपयोगित्वे न कोपि दोषः.

क्रिया-ज्ञानयोः स्वातन्त्र्येण पुरुषार्थसिद्ध्यर्थं भिन्नतया शास्त्रप्रवृत्तिः.

किञ्च. वेदान्तवाक्यानाम् अस्मिन् शास्त्रे समन्वयएव प्रतिपाद्यते सन्देहनिराकरणद्वारा. तत् कथं सिद्धवद्धेतुत्वेन निर्देशः. अग्रिमवैयर्थ्यं च स्यात्. नच प्रतिज्ञागर्भितहेतुत्वम्, अनुपयोगात्. गौणमुख्यभावे परं विवादः. नच येन रूपेण समन्वयो मतान्तरस्थैः विचारितः तथा अग्रे सूत्रेषु निर्णयो अस्ति.

शास्त्रारम्भस्तु प्रथमसूत्रएव समर्थितः. तस्मात् समवायिकारणत्वमेव अनेन सूत्रेण सिद्धम्. ननु कारणत्वमेव अस्तु ब्रह्मणः. किं समवायिकारणत्वेन? विकृतत्वं च स्यात्. अनर्थरूपत्वेन कार्यस्य अयुक्तता च. तस्माद् अनारम्भणीयमेव एतत् सूत्रम् इति चेद्, मा एवम्. सर्वोपनिषत्समाधानार्थं प्रवृत्तः सूत्रकारः. तद् यदि ब्रह्मणः समवायित्वं न ब्रूयाद् भूयान् उपनिषद्भागो व्यर्थः स्यात्.

"इदं सर्वं यदयमात्मा" (बृहदा.उप.2।4।5/4।5।7)

"आत्मैवेदं सर्वम्" (छान्दो.उप.7।25।2)

"स सर्वं भवति, ब्रह्म तं परादात्" (बृहदा.उप.2।4।6) इत्यादिः,

"स आत्मानं स्वयमकुरुत" (तैत्ति.उप.2।7)

"एकमेवाद्वितीयं" (छान्दो.उप.6।2।1)

"वाचारम्भणं विकारः" (छान्दो.उप.6।1।4) इत्याद्येवमादीनि वाक्यानि स्वार्थे बाधितानि भवेयुः.

ननु एवं निःसन्दिग्धत्वात् कथं सूत्रप्रवृत्तिः? उच्यते. अस्थूलादि-वाक्यान्यपि सन्ति सर्वत्र प्रपञ्चतद्धर्मवैलक्षण्यप्रतिपादकानि. ततो अन्योन्य-विरोधेन एकस्य मुख्यार्थबाधो वक्तव्यः. तत्र स्वरूपापेक्षया कार्यस्य गौणत्वात् प्रपञ्चरूपप्रतिपादकानामेव

कश्चित् कल्पयेत्. तन् मा भूद् इति जन्मादिसूत्रवत् समन्वयसूत्रमपि सूत्रितवान्. तथाच अस्थूलादिगुणयुक्तएव अविक्रियमाणएव आत्मानं करोति इति वेदान्तार्थः सङ्गतो भवति. विरुद्धसर्वधर्माश्रयत्वन्तु ब्रह्मणो भूषणाय.

किञ्च, अन्यपदार्थसृष्टौ वैषम्य-नैर्घृण्ये स्याताम्. कर्माधीनत्वेतु अनीशता. ततः कर्तृत्वमपि भज्येत. ततः सर्वमाहात्म्यनाशएव स्यात्.

ननु एवमेव अस्तु, अपवादार्थत्वात्, रज्जुसर्पवद् अयुक्तार्थकथनेऽपि न दोषः "सर्वं समाप्नोषि ततोसि सर्वः" (भग.गीता 11।40) इति स्मृतेश्च इति चेत्, मा एवम्. तथा सति पाषण्डित्वं स्यात्. एतादृशशास्त्रार्थाङ्गीकर्तुः आसुरेषु भगवता गणितत्वात्. "असत्यम् अप्रतिष्ठन्ते जगदाहुरनीश्वरम् अपरस्परसम्भूतं किमन्यत् कामहैतुकम्" (भग.गीता 16।8) इति शास्त्रानर्थक्यञ्च. "सर्वं समाप्नोषि" इत्यपि असङ्गतं स्यात्, वस्तुपरिच्छेदात्. नहि वेदो निष्प्रपञ्चरूप-कथनम् उक्त्वा स्वोक्तं जगत्कर्तृत्वं निषेधति. तस्माद् अध्यारोपापवादपरत्वेन व्याख्यातृभिः वेदान्ताः तिलापः कृता इति मन्यामहे, सर्ववाक्यार्थबाधात्. यथा निर्दोषपूर्णगुणविग्रहता भवति तथा उपरिष्टाद् वक्ष्यामः.

ननु पुरुषार्थार्थानि शास्त्राणि. इदञ्च शास्त्रं मोक्षरूपपुरुषार्थसाधकम्. मोक्षश्च अविद्यानिवृत्तिरूपः इति युक्तम्. अविद्या च अज्ञानं ज्ञानेनैव नश्यति. ततो ज्ञानोपयोगित्वेन व्याख्यातव्ये वेदान्ते अध्यारोपापवादव्यतिरेकेण व्याख्यानम् अयुक्तम्. अतो यथाकथञ्चिद् व्याख्यानेऽपि पुरुषार्थसिद्धेः न कोऽपि दोषः इति चेद्, न. पुरुषार्थस्य शास्त्रार्थस्य वा स्वरूपं शास्त्रैकसमधिगम्यं, न स्वबुद्धिपरिकल्पितम्. अतः स्वबुद्ध्या शास्त्रार्थं परिकल्प्य तत्र वेदं योजयन्तो महासाहसिकाः सद्भिः उपेक्ष्याः.

पुरुषार्थः पुनः यथा वेदान्तेषु अवगतः

"ब्रह्म वेद ब्रह्मैव भवति" (मुण्ड.उप.3।2।9)

"ब्रह्मविदाप्नोति परम्" (तैत्ति.उप.2।1)

"न स पुनरावर्त्तते" (छान्दो.उप.8।2।9)

"ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्" (भग.गीता 18।55)

"अनावृत्तिः शब्दाद् अनावृत्तिः शब्दात्" (ब्रह्मसू.4।4।22) इत्यवमादिभिः श्रुति-स्मृति-न्यायैः ब्रह्मप्राप्तेरेव पुरुषार्थत्वम्. ब्रह्म च पुनः न जीवस्य आत्ममात्रम् अज्ञानवद् वा "एकस्यैव ममांशस्य जीवस्यैव महामते, बन्धोस्याविद्ययानादिर् विद्यया च तथेतरः" (भाग.पुरा.11।11।4) इति भगवता जीवस्यैव अविद्यावत्त्वप्रतिपादनात्. तस्माद् न्यायोपबृंहित-सर्ववेदान्तप्रतिपादित-सर्वधर्मवद् ब्रह्म. तस्य श्रवण-मनन-निदिध्यासनैः अन्तरङ्गैः शमदमादिभिश्च बहिरङ्गैः अतिशुद्धे चित्ते स्वयमेव आविर्भूतस्य स्वप्रकाशस्य सायुज्यं परमपुरुषार्थः. तस्मात् सर्वे वेदान्ताः स्वार्थएव युक्तार्थाः इति न्यायैः वक्तव्यत्वाद् ब्रह्मणः समवायित्वाय समन्वयसूत्रं वक्तव्यम्.

इति प्रथमाध्याये प्रथमपादे तृतीयं समन्वयाधिकरणम्॥3॥

एवं ब्रह्मजिज्ञासां प्रतिज्ञाय किंलक्षणकं ब्रह्म? इति आकांक्षायां 'जन्मादि'सूत्रद्वयेन वेदप्रमाणकं जगत्कर्तृ समवायि च इति उक्तम्. एवं त्रिसूत्र्या जिज्ञासालक्षणविचारकर्तव्यता सिद्धा.

तत्र ब्रह्मणि चतुर्धा विचारः : स्वरूप-साधन-फलप्रतिपादकानि वेदान्तवाक्यानि त्रिविधानि, मतान्तरनिराकरणञ्च. तत्र स्वरूपे विचारिते मतान्तरनिरासव्यतिरेकेण साधन-फलयोः अनुपयोगात्. अतः प्रथमं स्वरूपनिर्णयः. तदनु मतान्तरनिरासः. तदनु साधनानि फलं च इति. तत्र प्रथमे अध्याये स्वरूपवाक्यानि विचार्यन्ते. तानि द्विविधानि सन्दिग्धानि, निःसन्दिग्धानि च. तत्र निःसन्दिग्धानां निर्णयो न वक्तव्यः. सन्दिग्धानि पुनः चतुर्विधानि : कार्यप्रतिपादकानि, अन्तर्यामिप्रतिपादकानि, उपास्यरूप-प्रतिपादकानि, प्रकीर्णकानि च इति.

तत्र प्रथमपादे कार्यवाक्यानां निर्णयः उच्यते. सच्चिदानन्दरूपेण आकाश-वायु-तेजोवाचकवाक्यानि षड्विधान्यपि निर्णीयन्ते. अन्यत्र अन्यवाचकान्यपि वेदान्तेषु भगवद्वाचकानि इति.

तत्र लक्षणविचारएव सद्रूपाणां वाचकता निर्णीता. चिद्रूपस्य ज्ञानप्रधानस्य निर्णयार्थम् ईक्षत्यधिकरणम् आरभ्यते सप्तभिः सूत्रैः, सप्तद्वारत्वाद् ज्ञानस्य. तत्र एवं सन्देहः. ब्रह्मणः स्वप्रकाशत्वेन सर्वप्रमाणाविषयत्वात् "यतो वाचो निवर्तन्ते" (तैत्ति.उप.2।4) इति श्रुतेश्च विचारः कर्तुं न शक्यते, स्वप्रकाशत्वविरोधात् श्रुतिविरोधाच्च आहोस्विद् विरोधपरिहारेण शक्यते इति.

किं तावत् प्राप्तम्? न शक्यते इति. कुतः?

ज्ञापनार्थं प्रमाणानि सन्निकर्षादिमार्गतः।
सर्वथाऽविषयेऽवाच्येऽव्यवहार्ये कुतः प्रमा॥13॥

ऐहिकामुष्मिक-व्यवहारयोग्ये पुरुषप्रवृत्तिः. प्रवृत्त्यर्थं हि प्रमाणानि. ब्रह्म पुनः सर्वव्यवहारातीतम् इति. ननु एतदपि वेदादेव अवगम्यते इति चेत्, तर्हि बाधितार्थप्रतिपादकत्वाद् न वेदान्ताः विचारयितव्याः इति प्राप्ते उच्यते.

## ईक्षतेर्नाशब्दम्॥4॥ (1।1।4)

न विद्यते शब्दो यत्र इति अशब्दं सर्ववेदान्ताद्यप्रतिपाद्यं ब्रह्म न भवति. कुतः? ईक्षतेः.

"सदेव सौम्येदमग्र आसीद् एकमेवाद्वितीयम्" (छान्दो.उप.6।2।1)

इति उपक्रम्य

"तदैक्षत बहुस्याम् प्रजायेय" (तत्रैव 6।2।1) इति.

“तत्तेजोऽसृजत” (तत्रैव 6।2।3) तथा अन्यत्र
“आत्मा वेदमेक एवाग्र आसीद् नान्यत्किञ्चन मिषत्”(ऐत.उप.1।1।1)
“स ऐक्षत लोकानुसृजा” (तत्रैव 1।1।1),
“स इमान् लोकानसृजत” (तत्रैव 1।1।2) इति.
“स ईक्षाञ्चक्रे” (प्रश्नोप.6।3),
“स प्राणम् असृजत” (तत्रैव 6।3) इत्येवमादिषु सृष्टिवाक्येषु ब्रह्मणः ईक्षा प्रतीयते.

किम् अतो यदि एवम्-एवम् एतत् स्यात्. सर्वव्यवहारप्रमाणातीतोऽपि ईक्षाञ्चक्रे “लोकसृष्टिद्वारा व्यवहार्यो भविष्यामि” इति. अतो यथा-यथा कृतवान् तथा-तथा स्वयमेव उक्तवान्. पूर्वरूपं फलरूपञ्च सृष्टस्वांश-पुरुषार्थत्वाय. ततश्च प्रमाणबलेन अविषयः स्वेच्छया विषयश्च इति उक्तम्.

ननु सर्वप्रमाणविषयत्वे दूषिते केवलवेदविषयत्वं कथं सिद्धान्तीक्रियते? उच्यते. चक्षुरादीनां प्रामाण्यम् अन्यमुखनिरीक्षकत्वेन, न स्वतः, भ्रमानुत्पत्तिप्रसङ्गात्. सत्त्वसहितानामेव चक्षुरादीनां प्रामाण्यात्. अतो निरपेक्षाएव भगवन्निःश्वासरूपवेदाएव प्रमाणम्. सङ्केतग्रहस्तु वैदिकएव वेदविद्भिः कृतः. आकृतिमात्रार्थं लोकापेक्षा. अनधिगतार्थगन्तृ च प्रमाणं, लोकानधिगतः इति अर्थः. यज्ञ-ब्रह्मणोः अलौकिकत्वं सिद्धमेव. लौकिको व्यवहारः सन्निपातरूपत्वात् पुरुषार्थासाधकएव. तर्हि शब्दमात्रस्य कथं ग्रहणम्? वेदव्याख्यातृवाग्विषयत्वाद् इति ब्रूमः. एतेन “मनसैवानुद्रष्टव्यम्” (बृहदा. उप.4।4।19) इत्यपि समर्थितम्. तस्मात् सृष्ट्यादिप्रतिपादकापि वेदान्ताः साक्षात् ब्रह्मप्रतिपादकाः इति सिद्धम्॥4॥

स्याद् एतत्. कर्तृत्वम् अकर्तृत्वं च वेदे प्रतीयते ब्रह्मणः.
“यतो वा इमानि भूतानि जायन्ते” (तैत्ति.उप.3।1),
“स आत्मानं स्वयमकुरुत” (तैत्ति.उप.2।7)
“निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्” (श्वेता.उप.6।19)
“असङ्गो ह्ययं पुरुषः” (बृहदा.उप.4।3।15)

इत्येवमादिवाक्येषु. तत्र द्वेधा निर्णयः सम्भवति, सर्वभवनसमर्थत्वाद् विरुद्धसर्वधर्माश्रयत्वेन, अन्यतरबाधाद् वा. अलौकिकापेक्षया लौकिकस्य जघन्यत्वात् कर्तृत्वादेः लोकसिद्धत्वात् कर्तृत्वबाधएव युक्तः. ईक्षत्यादिकन्तु प्रकृतिगुणसम्बन्धादपि ब्रह्मणो युज्यते. तस्माद् अलौकिक-सर्वभवनसमर्थत्वादि-कल्पनापेक्षया लौकिकएव अन्यतरबाधो युक्तः. ततश्च सत्यस्वरूपाद् अन्यदेव एतद् इति स्वयमेव आशङ्क्य परिहरति सूत्रकारः.

गौणश्चेन्नात्मशब्दात्॥5॥

ईक्षत्यादियुक्तः परमात्मा गौणः प्रकृतिगुणसत्त्वसम्बन्धवान् इति चेद्, न, तथा वक्तुं न शक्यते. कुतः? आत्मशब्दात्. "आत्मा वा इदमेक एवाग्र आसीद्" (ऐत.उप.1।1) इति उपक्रम्य "स ऐक्षत" (ऐत.उप.1।1) इति उक्तम्. 'आत्म'शब्दः पुनः सर्वेषु वेदान्तेषु निर्गुणपरब्रह्मवाचकत्वेनैव सिद्धः. तस्यैव जगत्कर्तृत्वं श्रुतिः आह.

ननु च उक्तम् अन्यतरबाधो युक्तः इति. न युक्तः, स्वातन्त्र्याभावेन सगुणस्य कर्तृत्वायोगात्. वेदाश्च प्रमाणभूताः. ततः सर्वभवनसामर्थ्यमेव श्रुतिबललभ्यम् अङ्गीकर्तव्यम्.

किञ्च. अस्ति-भाति-प्रियत्वादिधर्मवद् ब्रह्मगतकर्तृत्वं लोके प्रतीयते, कार्यत्वात्. तस्माद् 'आत्म'शब्दप्रयोगाद् गुणातीतमेव कर्तृ॥5॥

ननु 'आत्म'शब्दोऽपि लोकवद् गौणो अस्तु. लोके हि केनचित् पृष्टो विष्णुमित्र आह "यज्ञदत्तो ममात्मा" इति. अत्र गौणत्वम् उपचारः इति एवं प्राप्ते, अभिधियते.

तन्निष्ठस्य मोक्षोपदेशात्॥6॥

एवं हि श्रूयते ः "असद्वा इदमग्र आसीत्. ततो वै सदजायत. तदात्मानं स्वयमकुरुत" (तैत्ति.उप.2।7) इति उपक्रम्य "यदा ह्येवैष एतस्मिन् अदृश्ये अनात्म्ये अनिरुक्ते अनिलयने अभयं प्रतिष्ठां विन्दते, अथ सो अभयं गतो भवति" (तत्रैव 2।7) इति.

प्रापञ्चिकधर्मरहिते ब्रह्मणि एतस्मिन् पूर्वोक्तजगत्कर्तरि परिनिष्ठितो मुक्तो भवति इति अर्थः. तत्र यदि जगत्कर्ता गौणः स्यात् तन्निष्ठस्य संसारएव स्याद्, न मोक्षः॥6॥

किञ्च,

हेयत्वावचनाच्च॥7॥

इतोऽपि निर्गुणएव जगत्कर्ता. वेदान्तेषु सर्वत्र साधनोपदेशे पुत्रादिवद् जगत्कर्ता हेयत्वेन न उपदिश्यते. यदि सगुणः स्यात् प्राकृतगुणपरिहारार्थं मुमुक्षभिः जगत्कर्ता न उपास्यः स्यात्, पुत्रादिवत्. अतः ईक्षत्यादयो न सगुणधर्माः. सूत्रत्रयस्य 'ईक्षति'हेतुसाधकत्वात् 'च'कारः. एवं सूत्रचतुष्टयेन ईक्षति-हेतुना जगत्कर्तृत्वोपपत्त्या सृष्टिवाक्यानां ब्रह्मपरत्वम् उपपादितम्॥7॥

अतःपरं स्वतन्त्रहेतून् आह :

"स्वाप्ययात्" (ब्रह्मसू.1।1।8)

"गतिसामान्यात्" (ब्रह्मसू.1।1।9)

"श्रुतत्वाच्च" (ब्रह्मसू.1।1।10) इति सूत्रत्रयेण.

ननु किमर्थं हेत्वन्तराणि? साधकत्वे एकेनापि तत्सिद्धेः. असाधकत्वे शतेनापि असिद्धेः इति चेत्, मा एवम्. रूपभेदार्थं हेत्वन्तराणि नानाविधान्न-भोजनतृप्तिवत्.

“तद्यथा ‘आत्म’शब्दात्” (ब्रह्मसू.1।1।5), “तन्निष्ठस्य मोक्षोपदेशात्”, (ब्रह्मसू.1।1।6) “हेयत्वावचनाच्च” (ब्रह्मसू. 1।1।7) इति निर्गुणस्य स्वरूपपरतया कार्यपरतया च. कार्यस्य पुनः विधिनिषेधभेदाद् द्विरूपता इति. एवम् उत्तरत्रापि प्रपञ्चयिष्यते. तत्र सृष्टिवाक्यानाम् ईक्षतिहेतुना भगवत्परत्वम् उक्तम्. इदानीं प्रलयवाक्यानाम् आह.

स्वाप्ययात्॥8॥

ब्रह्मणो न सर्वव्यवहारातीतत्वम्. कुतः? स्वाप्ययात् स्वस्मिन्नपि अयात्. तत्र चित्प्रकरणत्वाद् जीवस्य उच्यते. एवं हि श्रूयते. “यत्रैतत् पुरुषः ‘स्वपिति’ नाम सता सौम्य तदा सम्पन्नो भवति तस्माद् एनं स्वपिति इति आचक्षते स्वं ह्यपीतो भवति” (छान्दो.उप.6।8।1) इति.

‘स्वपिति’ इति न क्रियापदं किन्तु जीवस्य नाम. तदैव स्वपितिनामत्वं यदा सता सम्पद्यते. सति ‘स्व’शब्दवाच्ये अपीतिं लयं प्राप्नोति इति अर्थः. अहरहर् जीवो ब्रह्म सम्पद्य ततो बलाद्यधिष्ठानं प्राप्य पुनर्नवइव समायाति, वासनाशेषात्. ‘स्व’शब्देन च अभेदः. अर्थतः ‘सच्’छब्दसामानाधिकरण्याद् निर्गुणत्वम्.

ननु प्रलये वक्तव्ये कथं सुषुप्तिः? मोक्षातिरिक्तदशायां तथाकर्म-सम्बन्धाभावाद् इति ब्रूमः॥8॥

मुक्तिवाक्यानाम् आह.

गतिसामान्यात्॥9॥

गतौ सामान्यात्. गतिः मोक्षः. समानस्य भावः सामान्यम्. मोक्षे सर्वस्यापि भगवतापि तुल्यत्वात्. एवं हि श्रूयते “स यथा सर्वासामपां समुद्र एकायनम्” (बृहदा.उप.2।4।11) इति उपक्रम्य “वागेकायनम्” (तत्रैव) इति दृष्टान्तार्थं निरूप्य “स यथा सैन्धवखिल्य उदके प्रास्तः” (तत्रैव 2।4।12) इत्यादिना लयदृष्टान्तं निरूप्य “न प्रेत्य सञ्ज्ञास्ति” (तत्रैव 2।4।12) इति प्रतिपाद्य तन्निरूपणार्थं “यत्र हि द्वैतमिव भवति तदितर इतरम्” (तत्रैव 2।4।14) इत्यादिना सर्वस्य शुद्धब्रह्मत्वं प्रदर्शितम्. आदिमध्यावसानेषु शुद्धब्रह्मणएव उपपादनात् सर्वेषां वेदान्तानां ब्रह्मसमन्वयः उचितः इति॥9॥

किञ्च,

श्रुतत्वाच्च॥10॥

“पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते, पूर्णस्य पूर्णमादाय पूर्णमेव अवशिष्यते” (बृहदा.उप.5।1।1) इति श्रुत्येव असन्दिग्धं सर्वकार्यत्वं प्रतिपादितम्. “सर्वे वेदा यत् पदम् आमनन्ति” (कठोप.1।2।15) इति च. ‘च’कारो अधिकरणसम्पूर्णत्वद्योतनाय. एवं चिद्रूपस्य कारणतानिरूपणेन वेदान्तानां ब्रह्मपरत्वं निरूपितम्॥10॥

इति प्रथमाध्याये प्रथमपादे चतुर्थम् ईक्षत्यधिकरणम्॥4॥

अतः परम् आनन्दरूपस्य कारणत्वोपपादनेन तद्वाक्यानां ब्रह्मपरत्वम् उपपाद्यते 'आनन्दमया'द्यष्टभिः सूत्रैः. तत्र तैत्तिरीयशाखायां ब्रह्म-भृगुप्रपाठकद्वयेन तत्र 'आनन्दमयः' इति 'मयट्'प्रत्ययान्तस्य अब्रह्मत्वेन अजगत्कर्तृत्वे ब्रह्मप्रपाठकस्य अब्रह्मपरत्वं स्याद् इति तन्निराकरणार्थम् आनन्दमयाधिकरणम्. षडिन्द्रियस्वरूपद्वयानन्दभेदेन आनन्दस्य अष्टविधत्वाद् अष्टसूत्राणि.

ननु कथं सन्देहः? कथं वा अस्य अब्रह्मत्वे प्रपाठकासङ्गतिः? इति उच्यते. ब्रह्मविदः परप्राप्तिं प्रतिज्ञाय ज्ञेयांशे कारणत्वाय आनन्दांशम् अप्रवेश्य जडत्वपरिहाराय सर्वज्ञानन्दरूपं फलम् उपपाद्य तन्निरूपणार्थं सर्वोऽपि प्रपाठकः आरब्धः. तत्र साधनशेषब्रह्मणो वाक्यादेव निःसन्दिग्धप्रतीतेः फलस्य ब्रह्मत्वं प्रतिपादनीयम्. तत्र अब्रह्मान्नमयादितुल्यवचनात् सुखवाचकशब्दानामेव वचनाच्च सन्देहः. आनन्दांशस्यैव कारणत्वेन ब्रह्मत्वप्रतिपादनार्थत्वात् तदभावे प्रपाठकवैयर्थ्यञ्च.

फलस्य नैकट्यप्रतिपादनाय 'आत्म'पदप्रयोगेण फलरूपेण जगत्कारणताम् उक्त्वा तस्यैव मध्ये सर्वान्तरत्वं प्रतिपादितं "तस्माद् वा एतस्माद् विज्ञानमयाद् अन्योऽन्तर आत्मा आनन्दमयः" (तैत्ति.उप.2।5) इति. अन्ते च "एतम् आनन्दमयमात्मानम् उपसङ्क्रामति" (तैत्ति.उप.2।5) इति. आदि-मध्यरूपे अनूद्य फलत्वेन उपपादितम्. तन्निरूपकस्यापि तत्तुल्यफलत्वं वक्तुम् अन्नमयादीनामपि ब्रह्मत्वेन उपासनम् उक्तम्.

तत्र पूर्वपक्षे अन्नमयादिरिव आनन्दमयस्यापि न ब्रह्मत्वम्, अन्नमयादितुल्यवचनात् तथैव फलसिद्धेः इति. एवं प्राप्ते अभिधीयते.

## आनन्दमयो अभ्यासात्॥11॥ (1।1।5)

आनन्दमयः परमात्मा, न अन्नमयादिवत् पदार्थान्तरम्. कुतः? अभ्यासात्. अभ्यस्यते पुनः-पुनः कीर्त्यते इति अभ्यासः, तस्मात्. अभ्यासस्य भेदकत्वं पूर्वतन्त्रसिद्धम्.

यथा पूर्वतन्त्रे शब्दान्तराभ्यास-सङ्ख्या-गुण-प्रक्रिया-नामधेयानां षण्णां कर्मभेदकत्वम् एवमेव आनन्दमयस्यापि अभ्यासात् पूर्ववैलक्षण्यम्. अतो अतुल्यत्वाद् ब्रह्मत्वम्. एवम् अभ्यासः श्रूयते "को ह्येवान्यात् कः प्राण्यात्, यदेश आकाश आनन्दो न स्यात्. एष ह्येव आनन्दयाति" (तैत्ति.उप.2।7) इति अर्थतो अभ्यासः. स्तुत्या मयडर्थत्वप्रकृतिस्तु तुल्या. पुनर्वचनेन अभ्यासेन प्रवाहाद् भेदे साधिते ब्रह्मत्वम्. नतु द्वयापत्तिः, उत्तरस्य साधकत्वात्. तस्माद् आनन्दमयं ब्रह्मैव.

अथवा "स नैव रेमे. तस्माद् एकाकी न रमते. स द्वितीयम् ऐच्छत्. सहैतावान् आस" (बृहदा.उप.1।4।3) इत्यादिश्रुतिभिः, "एष उ एव" (कौषी.उप.3।8) इति श्रुतेश्च

तानि-तानि साधनानि कारयित्वा तानि-तानि फलानि ददद् भगवान् स्वक्रीडार्थमेव जगद्रूपेण आविर्भूय क्रीडति इति वैदिकैः निर्णीयते. एतदेव काण्डद्वयेऽपि प्रतिपाद्यते. अन्यथा जीवस्य साधन-फले निरूपयन्त्याः श्रुतेः जीवपरत्वमेव स्याद् न ब्रह्मपरत्वम्. कर्म-ब्रह्मणोरपि जीवशेषत्वं न अपेयात्.

एवं सति पूर्वकाण्डे अवान्तरफलानि उक्त्वा "एतस्यैव आनन्दस्य अन्यानि भूतानि मात्राम् उपजीवन्ति" (बृहदा.उप.4।3।32) इति श्रुतेः निरवध्यानन्दात्मकमेव परमं फलम् इति तद्विवक्षमाणा पूर्वं सामान्यतः आह, ससाधनं तैत्तिरीये "ब्रह्मविदाप्नोति परम्" (तैत्ति.उप.2।1) इति. अक्षरब्रह्मवित् परं ब्रह्म आप्नोति इति अर्थः. अत्र 'पर'शब्दस्य पूर्वपरत्वे 'तद्' इत्येव वदेत्. पूर्वं 'ब्रह्मो'क्त्वा अग्रे यत् 'परम्' इति आह तेन सान्निध्यात् ततएव परं पुरुषोत्तमरूपमेव अत्र अभिप्रेतम् इति ज्ञायते.

किञ्च, प्रतिवादिना तदाप्तिः ज्ञानात्मिकैव वाच्या. तथा सति ब्रह्मप्राप्तो ब्रह्म प्राप्नोति इति अर्थः स्यात्. सच असङ्गतः, साधनसाध्यभावव्याहतिश्च.

अतः परं विशेषतः तद्विवक्षमाणानुभवैकगम्यं तत् स्वरूपं न अन्यमान-गम्यम् इति ज्ञापयितुम् अन्यमुखेन आह "तद् एषाभ्युक्ता" (तैत्ति.उप.2।1) इति. अन्यथा सर्वार्थतत्त्वप्रतिपादिका श्रुतिः एवं कथं वदेत् 'तद्' इति अव्ययम्. तथाच 'तत्' पूर्वोक्तं ब्रह्मविदः परप्राप्तिलक्षणम् अर्थं विशदतया प्रतिपाद्यत्वेन अभिमुखीकृत्य उपगृह्य ऋगेषा विदितपरब्रह्मकैः उक्ता. पूर्ववाक्योक्तार्थस्य वैशद्यम् अनया क्रियते इति अर्थः सम्पद्यते. तामेव आह "सत्यं ज्ञानम् अनन्तं ब्रह्म. यो वेद निहितं गुहायां परमे व्योमन् सो अश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" (तैत्ति.उप.2।1) सोपपत्तिकम् आनन्दात्मकत्वम् अग्रे निरूपणीयमिति अधुना तदनिरूप्य सच्चिदंशौ देशकालापरिच्छिन्नत्वञ्च उक्तवती.

अथवा, अक्षरब्रह्मणि आनन्दात्मकत्वे सत्यपि तस्य परिच्छिन्नत्वाद् न परमफलत्वम् अतः आनन्दे अपरिच्छिन्नत्वमेव परमफलतावच्छेदकम् इति तद्धर्मपुरःसरं परमानन्दएव 'अनन्त'शब्देन उच्यते अत्र. "सत्यं विज्ञानम् आनन्दं ब्रह्म" (सर्वसार.उप.3) "सच्चिदानन्दविग्रहम्" (मुण्ड.1।4) इत्यादिश्रुतिषु त्रयाणामपि एकप्रक्रमपठितत्वाद् द्वितयोक्तौ तन्नियतसहचरितत्वेन अनुक्तोऽपि आनन्दः प्राप्स्यतएव इति आशयेन वा आनन्दः स्फुटतया न उक्तः.

अथ वेदनपदार्थम् आह "यो वेद" इत्यादिना. अत्र इदम् आकूतम्. "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन, यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्" (मुण्ड.3।2।3) इति श्रुत्या वरणेतर-साधनाप्राप्यत्वम् उच्यते. एवं सति श्रुतिद्वयविरोधपरिहाराय अक्षरब्रह्मज्ञानेन अविद्यानिवृत्त्या प्राकृतधर्मराहित्येन शुद्धत्वसम्पादनेन पुरुषोत्तमप्राप्तौ स्वरूपयोग्यता सम्पाद्यते. तादृशे जीवे स्वीयत्वेन वरणे भक्तिभावात् सहकारियोग्यतासम्पत्त्या पुरुषोत्तमप्राप्तिः भवति इति निर्णीयते. तदैव गुहायां परमव्योमाविर्भावः. परो मीयते दृश्यते अनेन इति तथा. ज्ञानमार्गीय-

जीवज्ञेयप्रकारकाद् वैशिष्ट्येनापि तथा. परमव्योम्नो अत्यलौकिकत्वज्ञापनाय अलौकिकः प्रयोगः कृतः. "भक्त्या अहम् एकया ग्राह्यः" (भाग.पुरा. 11।14।21) "नाहं वेदैः" (भग.गीता 11।52) इति उपक्रम्य "भक्त्या तु अनन्यया शक्यः" (तत्रैव 11।54) इत्यादिस्मृतिरपि एवमेव सङ्गच्छते. अन्यथा ज्ञानमार्गीणामपि ब्रह्मविदां परप्राप्तिः स्याद् नतु एवम्

"मुक्तानामपि सिद्धानां नारायण-परायणः।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने॥
तस्मान् मद्भक्तियुक्तस्य योगिनो वै मदात्मनः।
न ज्ञानं नच वैराग्यं प्रायः श्रेयो भवेद् इह"
(भाग.पुरा.6।14।5,6)

इत्यादिवाक्यैः एतदेव आह. गुहायां हृदयाकाशे यदाविर्भूतं परमं व्योमाक्षरात्मकं व्यापिवैकुण्ठं, तस्य पुरुषोत्तमगृहरूपत्वात् तत्र निहितं स्थापितमिव वर्तमानं यो वेद स भक्तो ब्रह्मणा नित्याविकृतरूपेण विपश्चिता, विविधं पश्यच्चित्वं हि विपश्चित्वं पृषोदरादित्वात् पश्यच्छब्दावयवस्य यच्छब्दस्य लोपं कृत्वा व्युत्पादितो 'विपश्चिच्'छब्दः. तेन विविधभोगचतुरेण सह सर्वान् कामान् अश्नुते इति अर्थः. एतेन परप्राप्तिपदार्थः उक्तो भवति. शुद्धपुष्टिमार्गीयत्वाद् अस्य भक्तस्य स्वातन्त्र्यं भोगे उच्यते. सहभावोक्त्या ब्रह्मणो गौणत्वम्. अतएव भक्ताधीनत्वं भगवतः स्मृतिष्वपि उच्यते "अहं भक्तपराधीनः" (भाग.पुरा.9।4।63), "वशे कुर्वन्ति मां भक्त्या" (तत्रैव 9।4।66) इत्यादिवाक्यैः.

यद्यपि 'अश' भोजने इति धातोः अश्नाति इत्येव रूपं भवति, 'अशूङ्' व्याप्तौ इति धातोः भवति अश्नुते इति रूपं, विकरणभेदात् पदभेदाच्च. तथापि अत्र 'अश' भोजने इति धातोरेव प्रयोगः इति ज्ञायते. तथा हि अत्र अशनक्रियायां ब्रह्मणा सहभावः उच्यते. तथाच व्याप्त्यर्थकत्वे ब्रह्मणा सहभूतान् कामान् व्याप्नोति इति अर्थो भवति अथवा ब्रह्मणा सहभूतः सः जीवः कामान् व्याप्नोति इति. एतौतु अनुपपन्नौ. नहि कामवज्जीवकर्तृक-व्यापनक्रियाकर्मत्वं ब्रह्मणि सम्भवति अतिमहत्त्वात्.

व्यापनं च अत्र स्वाधीनीकरणमेव वाच्यम्. नहि कामानां तथात्वं स्वतः पुरुषार्थरूपम्, भोगशेषत्वात् तेषाम्. पूर्वोक्तपरप्राप्ति-व्याकृतिरूपत्वाच्च अस्य तथा अर्थो अनुपपन्नः.

तेन 'अश' भोजने इति धातोरेव अयं प्रयोगो, अर्थस्य अलौकिकत्व-ज्ञापनाय अलौकिकः प्रयोगः कृतः. "व्यत्ययो बहुलम्" (पा.सू.3।1।85) इति सूत्रेण छन्दसि तद्विधानात्, श्ना-प्रत्यय-परस्मैपदयोः व्यत्ययेन श्नुप्रत्यया-त्मनेपदे जाते इति भोगार्थकएव अयं धातुः एवमेव, "न तदश्नोति कञ्चन, न तदश्नोति कश्चन" (बृहदा.उप.3।8।8) इत्यत्र प्रत्ययमात्र-व्यत्ययेन प्रयोगो 'अश'धातोरेव इति ज्ञेयम्. अन्यथा सर्वव्यापकस्य ब्रह्मणः तन्निषेधो अनुपपन्नः स्यात्.

ननु सकामो अत्र उपासकः तदुपास्यञ्च सगुणं ब्रह्म, द्वयोरपि कामोपभोगश्रवणात्. "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" (बृहदा. उप.4।5।15) इति उपक्रम्य "यत्रतु अस्य सर्वमात्मैव अभूत् तत् केन कं पश्येत्" (तत्रैव 4।5।15) इत्यादिना अन्यदर्शनादिनिषेधात् ब्रह्मविदः कामोपभोगा-सम्भवश्च इति चेद्, मा एवम्. "तदेषाभ्युक्ता" (तैत्ति.उप.2।1) इति वाक्येन पूर्ववाक्योक्तार्थनिरूपिका इयम् ऋगिति उक्तत्वेन प्राकृतगुण-सम्बन्धस्य तत्र वक्तुम् अशक्यत्वात्. तथा सति ब्रह्मवित्प्राप्यत्व-परत्वयोः असम्भवापत्तेः. नच वेद्यस्य अगुणत्वम् उत्तरस्य सगुणत्वम् इति वाच्यं, परत्वानुपपत्तेः. साधनशेष-भूतस्य अगुणत्वं तत्फलस्य सगुणत्वम् इति असङ्गततरञ्च. "यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः" (भाग.पुरा.10।28।15) इति श्रीभागवतवाक्येन गुणातीतपुंसां वैकुण्ठदर्शनाधिकारः उच्यते यत्र तत्र किमु वाच्यं तत्परदर्शने.

यच्च उक्तं ब्रह्मविदो द्वैतदर्शनानुपपत्त्या कामभोगासम्भवः इति तत्रापि उच्यते. "यत्रतु अस्य सर्वमात्मैव अभूत्" (बृहदा.उप.2।5।15) इति श्रुतिः अखण्डब्रह्माद्वैतभाने ब्रह्मविदः प्रापञ्चिकभेदादर्शनं वदति, नतु प्रपञ्चातीतार्थदर्शनं बोधयति निषेधति वा. पुरुषोत्तमस्वरूपन्तु यावत् स्वधर्म-विशिष्टं प्रपञ्चातीतमेव इति तद्दर्शनादौ किम् आयातम्. "पुरुष एवेदं सर्वं यद् भूतं यच्च भव्यम्" (शु.यजु.संहि.31।2) इत्यनेन ब्रह्मात्मकत्वं प्रपच्चस्य उक्त्वा एतदपि तस्य विभूतिरूपं पुरुषस्तु इतो महान् इति आह "एतावान् अस्य महिमा अतो ज्यायांश्च पूरुषः" (तत्रैव 31।3) इति श्रुतिः. अतो न किञ्चिद् अनुपपन्नम्. एवं सति ब्रह्मविदः परप्राप्तेः पूर्वदशा "तत् केन" इत्यादिना उच्यते, उत्तरदशातु "सो अश्नुते" इत्यनेन उच्यते इति सर्वं सुस्थम्. छान्दोग्येऽपि "यत्र नान्यत् पश्यति" (छान्दो.उप.7।24।1) इत्यादिना भूमस्वरूपम् उक्त्वा "आत्मैव इदं सर्वम्" (तत्रैव 7।25।2) इत्यन्तेन तद्विभावम् उक्त्वा उच्यते. "स वा एष एवं पश्यन् एवं मन्वान एवं विजानन् आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति" (तत्रैव 7।25।2) इति. एतच्च, "लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि" (ब्रह्मसू. 3।3।43) इति अधिकरणे प्रपञ्चयिष्यते.

अथवा "तदेषाभ्युक्ता" इति वाक्येन पूर्ववाक्योक्त-ब्रह्मनिरूपिका इयम् ऋगिति उच्यते. तत्र साधन-फले निरूपिते इति ऋच्यपि ते एव निरूप्येते. तथाहि. आनन्दस्य फलात्मकत्वेन साधनशेषभूते ब्रह्मणि तम् अनुक्त्वा, "यो वेद" इत्यन्तया ऋचा "ब्रह्मविद्" इत्येतावतो वाक्यस्य विवरणं क्रियते. एतेन फलाप्तौ स्वरूपयोग्यतासम्पत्तिः उक्ता. ततः उक्तरीत्या भगवद्वरणेन भक्तिलाभे गुहायाम् आविर्भूतं यत् परमं व्योमः तस्मिन् निहितः पुरुषोत्तमएव इति. "तं निहितम्" इति तृतीया अर्थे द्वितीया. तथाच तत्र निहितेन ब्रह्मणा इति अग्रे पूर्ववत्.

अथ परमफलत्वात् निरवध्यानन्दात्मकत्वम् अन्तरङ्गेभ्योऽपि अन्तरङ्गत्वं स्वस्मिन् ज्ञापयितुं सर्वस्य सर्वरूपत्वेन सर्वाधिदैविकरूपत्वमपि ज्ञापयितुम्

आधिभौतिकादिरूपेण आविर्भवितुं भगवान् आकाशादिरूपेण आविर्भूतो अतएव भवने आकाशस्यैव कर्तृत्वम् उच्यते. अग्रे अन्नमयादीनि चत्वारि रूपाणि पूर्वं निरूपितानि उत्तरोत्तरम् अन्तरङ्गभूतानि. अन्न-रसमयशरीरभूतात् प्राणमयः, तस्माद् मनोमयः, तस्माद् विज्ञानमयः. कश्चित्तु एतानि रूपाणि विकारात्मकत्वात् प्राकृतान्येव एतेभ्योऽपि अन्तरङ्गो विमुक्ताविद्यो जीवएव आनन्दमयः उच्यते इति आह.

स: प्रतिवक्तव्यः : अग्रिमप्रपाठके भृगुणा "अधीहि भगवो ब्रह्म" (तैत्ति.उप.3।1) इति पृष्टो वरुणः तदा उत्तमाधिकाराभावात् स्वयं ब्रह्मस्वरूपम् अनुक्त्वा, तपसा अधिकारातिशयक्रमेण स्वयमेव ज्ञास्यति इति तदेव साधनं सर्वत्र उपदिष्टवान्. "तपसा ब्रह्म विजिज्ञासस्व" (तैत्ति.उप.3।2) इति. ब्रह्माति-रिक्तेन साधनेन न तज् ज्ञातुं शक्यम् इति ज्ञापनाय "तपो ब्रह्म" इति सर्वत्र उक्तवान्. तथाच तपसा साधनेन ब्रह्मत्वेन ज्ञातानि रूपाणि प्राकृतानि इति विचारकेण न वक्तुं शक्यम् इति. तर्हि पुनः ब्रह्मविषयक-प्रश्न-साधनोपदेश-तत्करण-पूर्वातिरिक्तब्रह्मज्ञानानां परम्परा न उपद्यते इति चेद्, मा एवम्. भगवतो हि विभूतिरूपाणि अनन्तानि. तत्र येन रूपेण यत् कार्यं करोति तेन रूपेण समर्थोऽपि तदतिरिक्तं न करोति. तथैव तल्लीला यतः.

तथाच अन्नमयादिरूपैः क्षुद्राण्येव फलानि ददाति. हीनाधिकारिणां तावतैव आकाङ्क्षानिवृत्तिः भवति. एवं सति यादृशेन अधिकारेण अन्नमय-स्वरूपज्ञानं भवति तादृशे तस्मिन् सम्पन्ने तज् ज्ञानमपि तथा. एवमेव उत्तरत्रापि. तथाच आकाशादिरूपम् आधिभौतिकस्वरूपम् उक्त्वा आध्यात्मिकं तत् पुरुषस्वरूपं वदन्ती पक्षिरूपम् आह. यतः तेनैव रूपेण आधिभौतिके रूपे आध्यात्मिकस्य पुरुषस्य प्रवेशः. तदुक्तं वाजसनेयिशाखायाम् "पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः, पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्" (बृहदा.उप. 2।5।18) इति. वस्तुतस्तु पुरुषएव. परन्तु पुरःसम्बन्धी सन् पक्षी भूत्वा पुरः शरीराणि आविशद् इति अर्थः. प्राकृतीषु विविधासु पूर्षु अप्राकृतस्य एकविधस्य प्रवेशो अनुचितो यद्यपि तथापि स्वप्रवेशं विना न किञ्चिद्भावीति गतिप्रतिबन्धकम् उल्लङ्घ्य अलौकिकया गत्या प्रविशामि इति ज्ञापनाय पक्षिभवनम्. सः हि तादृशः. अतएव द्विपदः चतुष्पदः इति उक्तम्. आधिदैविकः एकएव इति "यः पूर्वस्य" (तैत्ति.उप.2।3) इति सर्वत्र उक्तम्.

ननु आनन्दमयेऽपि एवम् उक्तेः न अयमपि परमकाष्ठापन्नरूपः, किन्तु पूर्वोक्तेभ्यो अतिशयितधर्मवान् विभूतिरूपएव. नच शिर आदीनाम् आनन्दरूपत्वेनैव उक्तेः अयं परमात्मैव इति वाच्यम्. अन्नमये यथा अवयवानां तद्रूपत्वं तथा आनन्दमयेऽपि तेषां तद्रूपत्वाद् अन्यथा "तस्य एषएव शारीर आत्मा" इति न वदेत्. शरीरं हि पूर्वोक्तं, तत्सम्बन्धी हि शारीरः तद्भिन्नः प्रतीयते. तथाच परब्रह्मत्वं स्वान्यात्मवत्त्वञ्च सर्वश्रुतिविरुद्धम्. ननु एतद् अतिरिक्तं चेद् ब्रह्म स्यात् तदा "आनन्दमयाद् अन्योऽन्तर आत्मा ब्रह्म" इत्यपि वदेत्. नतु एवम् अतो अयं परएव इति चेद्, न, आध्यात्मिकरूपाणामेव

अत्र निरूपणात्, तेषां च पञ्चरूपत्वात् तावतामेव निरूपणम् अतो अस्माद् अन्यएव परः इति प्राप्ते प्रतिवदति "आनन्दमयो अभ्यासात्". आनन्दमयशब्दवाच्यः परएव. कुतः? अभ्यासात्. "तस्यैषएव शारीर आत्मा. यः पूर्वस्य" (तैत्ति.उप. 2।5) इति अन्नमयादिषु सर्वत्रैव आत्मत्वेन आनन्दमयस्यैव कथनात्.

ननु न किञ्चिद् मानम् अत्र पश्यामः. किञ्च, आनन्दमयस्यैव सर्वत्र आत्मत्वेन कथने आनन्दमयेऽपि, "तस्यैष एव..." इत्यादि न वदेद् "अयमेव पूर्वस्य आत्मा" इति वदेद् अतो न आनन्दमयः परः इति चेद्, उच्यते. न हि ईश्वराद् अन्यः सर्वेषाम् एकः आत्मा भवितुम् अर्हति. तस्य आनन्दरूपत्वन्तु "एतस्यैव आनन्दस्य अन्यानि भूतानि मात्राम् उपजीवन्ति" (बृहद.उप.4।3। 32) इति. "रसो वै सः. रसं ह्येवायं लब्ध्वा आनन्दीभवति. को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्. एष ह्येव आनन्दयाति" (तैत्ति.उप. 2।7) इत्यादिश्रुतिभिः निर्णीयते. एवं सति तदेकवाक्यतायै प्रकृतोऽपि 'आनन्दमय'शब्दः तद्वाच्येव इति मन्तव्यम्. अन्यथा "आनन्दमयाद् अन्योऽन्तर आत्मा" इत्यपि वदेत्.

ननु उक्तम् आध्यात्मिकानामेव अत्र निरूपणाद् इत्यादिः इति चेद्, न. उक्तरीत्या आधिदैविकस्यैव अन्ते निरूपणात्. अतएव भार्गव्यां विद्यायामपि भृगोः अन्नमयादिज्ञानानन्तरमपि पुनः ब्रह्मजिज्ञासा उक्ता, नतु आनन्दमयज्ञाने. न हि भृगोः आध्यात्मिकज्ञानार्थं प्रवृत्तिः किन्तु ब्रह्मज्ञानार्थमेव, "अधीहि भगवो ब्रह्म" (तैत्ति.उप.3।1) इति प्रश्नवचनात्.

किञ्च, "ब्रह्मविद् आप्नोति परम्" (तैत्ति.उप.2।1) इति उपक्रमाद् अन्ते ज्ञेयानन्दगणनाम् उक्त्वा, "स यश्चायं पुरुषे यश्चासावादित्ये. स एकः" (तैत्ति.उप.2।8) इति वाक्यैः ब्रह्मविदि पुरुष आदित्ये च तदेव अक्षरं ब्रह्म प्रतिष्ठितम् इति तदानन्दोऽपि तथैव इति तयोः आनन्दयोः ऐक्यम्. एवं रूपं ब्रह्म इति यो वेदः तस्य क्रमेण अन्नमयादिप्राप्तिम् उक्त्वा अन्ते वदति "एतम् आनन्दमयम् आत्मानम् उपसङ्क्रामति" (तैत्ति.उप.2।8) इति. एवं सति उपक्रमे परप्राप्तेः फलत्वेन उक्तेः उपसंहारेऽपि तथैव भवितव्यत्वाद् आनन्दमय-प्राप्तेरेव अन्ते फलत्वेन उक्तेः तदुत्तरम् अन्यस्य अनुक्तेः आनन्दमयएव परः.

ननु उपसङ्क्रमणं हि अतिक्रमणम् अतो न तथा इति चेद्, हन्तैवम् अतिक्रान्त-शब्दार्थाः त्वन्मतिः भाति. यतः 'सङ्क्रमण'शब्दः प्राप्त्यर्थकः सर्वत्र श्रूयते. अतएव रवेः मकरादि-राशिप्राप्तौ तत्तत्सङ्क्रमणम् इति उच्यते. न च इयं न परममुक्तिः, "अस्माद् लोकात् प्रेत्य" इति पूर्वम् उक्तेः. अतएव पुरुषोत्तमा-नन्दानुभवे सति अनुभवैकगम्यो अयम् आनन्दो न मनोवाग्विषयः इति ज्ञात्वा लोक-वेद-कालादिभ्योऽपि न बिभेति इति "यतो वाच" (तैत्ति.उप. 2।4) इति श्लोकेन उक्तवती. अन्यथा आनन्दे मनसोऽपि अगम्यत्वम् उक्त्वा, 'विद्वान्' इति कथं वदेत्. एवं सति "सो अश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" (तैति.उप.2।1) इति ऋचि यत् फलम् उक्तं तदेव अन्ते विवृतम् इति ज्ञायते. अन्यथा "अस्माद् लोकात् प्रेत्य" इति उक्तत्वाद् देहाभावेन भयानुपस्थित्या तन्निषेधासम्भवः

कामभोगासम्भवश्च. अतएव सामानाधिकरण्यम् अनुक्त्वा, "आनन्दं ब्रह्मणः" इति उक्तम्. एतेन लौकिकं पूर्वदेहं त्यक्त्वा साक्षाद्-भगवद्भजनोपयोगिनं भगवद्विभूत्यात्मकं सङ्घातं प्राप्नोति इत्यादौ. तथाहि देहेन्द्रियप्राणान्तःकरणजीवात्मको हि सङ्घातः. तत्र स्थूलं शरीरम् आद्यविभूति-रूपम्. द्वितीयं स्पष्टम्. तृतीयं सर्वेन्द्रियसम्बन्धित्वेन इन्द्रियरूपत्वेन च अन्तःकर-णात्मकत्वेन च इन्द्रियान्तःकरणरूपम्. तुरीयं जीवतत्त्वात्मकम्. यत्र गुहायां भगवद्वरणेन परमव्योमार्विर्भावः ततः पूर्णानन्दात्मकं पुरुषोत्तमस्वरूपं फलरूपं प्राप्य उक्तऋगर्थरीत्या तेन सह सर्वकामाशनमेव मनोवागविषयानन्दवेदनं तद्वान् भवति इति वाक्यैकवाक्यतया अवगम्यते.

अथ इदं विचार्यते. "पुरश्चक्रे द्विपदः" (बहदा.उप.2।5।18) इति श्रुतौ वस्तुतस्तु पुरुषएव. परन्तु पुरःसम्बन्धी सन् पक्षी भूत्वा पुर आविशद् इति निरूपितम्. प्रकृते च अन्नमयादयः तथैव उक्ताः. एवं सति एकस्यां पुरि बहूनां तेषां प्रवेशो न वक्तुम् उचितः. प्रयोजनाभावाद् इतः एकैकस्यां पुरि तथा वाच्यः. तत्र कीदृश्यां तस्यां कस्य प्रवेशः इति विचार्यमाणे प्राकृतत्व-ब्रह्मत्वयोः अविशेषात् विनिगमकाभावात् सर्वेषां सर्वत्र प्रवेशो अप्रवेशो वा भवेद् इति चेद्, अत्र इदं प्रतिभाति : "अस्माद् लोकात् प्रेत्य" (तैत्ति.उप.2।8) इति वाक्ये 'इदं' शब्दप्रयोगात् प्राकृतगुणमयं प्रपञ्चम् अतिक्रम्य गुणातीतं प्रपञ्चं साक्षाल्लीलोपयोगिनं प्राप्नोति इति अवगम्यते. तत्प्राप्त्यैव भगवद्भावे सम्पन्ने पूर्वं भगवद्विरहभावेन अतितीव्रत्वेन सर्वोपमर्दिना शरीरेन्द्रियप्राणान्तःकरणानि नष्टान्येव स्युः यदि तत्तद्रूपं ब्रह्म तेषु-तेषु न प्रविष्टं स्यात्. जीवस्य च ब्रह्मण्येव लयेन लीलारसाननुभवेन नाशएव सः. तथाच तत्तद्रूपं ब्रह्म तेषु-तेषु स्थितमिति न तेषां नाशः. जीवेतु आनन्दमयः पुरुषोत्तमः प्रविशति इति रसात्मकत्वाद् आनन्दात्मकमेव विरहभावरसाब्धिम् अनुभूय पश्चात् प्रादुर्भूतं प्रभुस्वरूपं प्राप्य "न बिभेति कुतश्चन" (तैत्ति.उप.2।9) इतिवाक्येन लोकात् तदभावम् उक्त्वा, "एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवम्" (तैत्ति.उप.2।9) इति वाक्यैः वेदाद् भयाभावः उच्यते. शरीरप्राणमनो-ऽन्तःकरणजीवात्मनां शरीरत्वं वाजसनेयिशाखायाम् अन्तर्यामिब्राह्मणे पठ्यते. "यस्य सर्वाणि भूतानि शरीरं यस्य प्राणः शरीरं यस्य वाक् शरीरं यस्य चक्षुः शरीरं यस्य श्रोत्रं शरीरं यस्य मनः शरीरं यस्य त्वक् शरीरम्" (बृहदा.उप.3।7) इत्यादेः अन्ते "यस्यात्मा शरीरम्" इति. अत्र पूर्वोक्तनिर्गुणदेहानां भगवच्चरणरेणुजत्वेन भूतरूपत्वाद् ब्रह्मशरीरत्वम्. तत्र अन्नमयतत्प्रवेशेन तत्स्थितिः प्राणेष्वपि तथा. ज्ञानेन्द्रियेषु विज्ञानमयप्रवेशात् तथा. मनसि मनोमयप्रवेशात् तथात्वम्. जीवेतु आनन्दमयः प्रविशतीति तथात्वम् अतो युक्तं पक्षित्वकथनम्. आनन्दमयस्य स्वरूपं विशेषतो वक्तुम् अशक्यम् इति "यः पूर्वस्य" इति सर्वत्र उक्तम्. शरीरप्रवेशप्रयोजनक-पक्षिरूपित्वं पञ्चस्वपि साधारणम् इति तेषु तथा वदन्ति आनन्दमयेऽपि तथैव उक्तवती श्रुतिः इति ज्ञेयम्. एवं सति स्पर्शमणिसम्बन्धित्वेन रजतादेः हेमत्वमिव उक्तप्रकारकप्रवेशाद् आश्रयाणामपि तत्तदात्मकत्वम् इति उच्यते. वस्तुतस्तु परोक्षवादो

अयम् इति ज्ञायते. तथाहि “ब्रह्मविदाप्नोति परम्” इति वाक्येन ब्रह्मविदः परप्राप्तिं सामान्यतः उक्त्वा तत्तात्पर्यं “सत्यं ज्ञानम्” इति ऋचा उक्तम्. तत्र सर्वात्मभाववान् भक्तो भगवता सह तत्स्वरूपात्मकान् कामान् भुंक्ते इति उक्तव्याख्यानेन तदर्थो अवधार्यते. उक्तभक्तस्य सदैव, विरहभावेतु विशेषतः प्रियस्वरूपातिरिक्तास्फूर्त्या अन्नप्राणादिरूपः सएव इतिज्ञापनाय तत्तद्रूपत्वम् उच्यते.

तेन परमप्रेमवत्वं सिध्यति. ततो भगवदाविर्भावे सत्यपि पूर्वभावस्य अतितीव्रत्वेन ज्ञानादिसर्वतिरोधानेन अग्रिमरसानुभवो न भविष्यतीति स्वयमेव तदनुभवात्मको भवति इति ज्ञापनाय विज्ञानरूपत्वम् उच्यते. तद् अनुभवविषयः प्रकट आनन्दमयः इति तत्स्वरूपम् उच्यते. तत्र निरुपधिप्रीतिरेव मुख्या, न अन्यद् इति ज्ञापनाय प्रियस्य प्रधानाङ्गत्वम् उच्यते. तदा प्रियेक्षणादिभिः आनन्दात्मकएव विविधरसभावसन्दोहः उत्पद्यते यः सः दक्षिणः पक्षः उच्यते. ततः स्पर्शादिभिः पूर्वविलक्षणः प्रकृष्टानन्दसन्दोहो यः सः उत्तरः पक्षः उच्यते. नानाविधपक्षसमूहात्मकत्वात् तयोः पक्षयोः युक्तं तथात्वम्. स्थायिभावस्य एकरूपत्वाद् आत्मत्वम् उच्यते. यतः ततएव विभावादिभिः विविधभावोत्पत्तिः. परप्राप्तिसाधनीभूतब्रह्मज्ञानदशायां तदानन्दोऽपि यः पूर्वम् अनुभूतः सः गणितानन्दः इति एतद् आनन्दानुभवानन्तरं तुच्छत्वेन भाति इष्टगतौ असाधनत्वेन स्वरूपतोऽपि तस्माद् हीनत्वं च इति पृष्ठभागादपि दूरस्थित-पुच्छरूपत्वं ब्रह्मणः उच्यते. पुरुषोत्तमाधिष्ठानत्वात् प्रतिष्ठारूपत्वं च. एवं सति अक्षरादपि उत्तमत्वेऽपि अप्रधानीभूयः भक्तकामपूरणकर्तृत्वे असम्भावना विपरितभावना च सम्भवति. तदभावाय “असन्नेव स भवति” इत्याद्युक्तम्. स्वानुभवाभावेऽपि गुरूपदेशादिनापि तदस्तित्वमात्रमपि यो जानाति तं ब्रह्मविदः सन्तं सत्त्वधर्मविशिष्टं वर्तमानञ्च विदुः इति अग्रे अवदद् “अस्ति ब्रह्मेति चेद्...” इत्यादिना. ब्रह्मासत्त्वज्ञाने असन् भवति इति उक्त्वा तदस्तित्वज्ञाने सन् भवति इति अनुक्त्वा, “सन्तमेनं विदुः” इति तत्त्वेन अन्यज्ञानं यद् उक्तं तेन उक्तपुरुषोत्तमानन्दानुभववन्तं ज्ञानक्रियाविशिष्टं जीवं वर्तमानं विदुः. अननुभवे केवलं गुरूपदेशादिना तादृग्ब्रह्मास्तित्वज्ञाने स्वरूपतः सन्तं तं विदुः नतु ज्ञानादिमन्तम्. तदसत्त्वज्ञानेतु अलीकतुल्यम् इति श्रुतितात्पर्यम् इति ज्ञायते.

एवं विचारचातुर्यवद्भिः सद्भिर्व्रजाधिपे।
आनन्दमयतानन्द-सन्दोहायावधार्यते॥ ॥11॥

ननु आनन्दमयस्य न ब्रह्मता वक्तुं शक्या. मयटो लोके विकाराधिकारविहितत्वाद् इति आशङ्क्य स्वयमेव परिहरति.

विकारशब्दान्नेति चेन्न प्राचुर्यात्॥12॥

अनेनैव पूर्वसूत्रार्थः सिद्धो भविष्यति. विकारवाचि शब्दो ‘मयट्’प्रत्ययो यस्मिन् तद् ‘विकार’शब्दं तस्मात् ‘तच्छ’ब्दवाच्यं ब्रह्म न भवति. ब्रह्मणो अविकारित्वाद् इति चेद्,

न. अत्र विकारे मयट् किन्तु प्राचुर्यात्. प्राचुर्यम् अतति प्राप्नोतीति प्राचुर्यात्. तथाच पाणिनिः. “तत्प्रकृतवचने मयट्” (पाणि.सूत्र 5।4।21) प्राचुर्येण प्रस्तुतं वचनं तत् प्रकृतवचनं, तस्मिन् ‘मयट्’प्रत्ययो भवति इति अर्थः.

प्राचुर्येण पूर्वापेक्षयापि आधिक्येन “को ह्येवान्यात् कः प्राण्यात्” (तैत्ति.उप.2।7) इति वाक्ये प्रकर्षेण स्तुतम्. अतो मयट् पूर्वापेक्षया प्राचुर्यमयते. एकदेशनिर्देशेन तदर्थलक्षणया प्राचुर्यः. प्राचुर्येण प्रस्तुतार्थवाचकत्वाद् इति अर्थः इति वा.

छन्दसि द्व्यज्-व्यतिरिक्त-स्थले मयटो विकारे विधानाभावात् व्याकरणमपि अर्थनिर्णायकम्. विज्ञानमयानन्दमयशब्दौ पश्यन्नपि पाणिनिः “मयड्वैतयोर्भाषायां” (पाणि.सूत्र 4।3।143) “द्व्यचश्छन्दसि” (पाणि.सूत्र 4।3।150) इति कथम् अवोचत्.

अत्र केचित् सर्वविप्लववादिनो विकारार्थत्वं वदन्ति, श्रुतिसूत्रादीनाम् अर्थाज्ञानात्. तद् वेदाद्यर्थविद्भिः भगवतो नवमावतारकार्यं ज्ञात्वा उपेक्ष्यम्. यो अर्थः तम् अवोचाम॥12॥

शब्दबलविचारेण मयटो विकारार्थत्वं निवारितम्. अर्थबलविचारेणापि निराकरोति.

तद्धेतुव्यपदेशाच्च॥13॥

हेतुत्वेन व्यपदेशो हेतुव्यपदेशः. तस्य हेतुव्यपदेशः तद्धेतुव्यपदेशः तस्मात्. “एष ह्येव आनन्दयाति” (तैत्ति.उप.2।7) इति. आनन्दयति इति अर्थः. सर्वस्यापि विकारभूतस्य आनन्दस्य अयमेव आनन्दमयः कारणम्. यथा विकृतस्य जगतः कारणं ब्रह्म अविकृतं सच्चिद्रूपं एवमेव आनन्दमयोऽपि कारणत्वाद् अविकृतो अन्यथा तद्वाक्यं व्यर्थमेव स्यात्. तस्माद् न आनन्दमयो विकारार्थः. ‘च’कारः समुच्चयं वदन् सूत्रद्वयेन एको अर्थो मध्ये प्रतिपादितः इति आह॥13॥

ननु किमिति निर्बन्धेन सूत्रत्रयेण एवं वर्ण्यते? अन्नमयादिवद् उपासनापरत्वेनापि श्रुत्युपपत्तेः पक्षपुच्छादित्वेन मोदप्रमोदादीनाम् उक्तत्वाच्च. तस्माद् ब्रह्मत्वेन साधितमपि आवश्यकोपपत्यभावाद् न ब्रह्मपरत्वम् इति प्राप्ते अभिधीयते.

मान्त्रवर्णिकमेव च गम्यते॥14॥

“सत्यं ज्ञानम् अनन्तं ब्रह्म. यो वेद निहितं गुहायां परमे व्योमन्. सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता” (तैत्ति.उप.2।1) इति मन्त्रः. मन्त्रेण अभिधया वृत्त्या प्रतिपाद्यं मान्त्रवर्णिकम्. तदुपपादनग्रन्थे तदेव मुख्यतया ज्ञायते. यत्र यदुद्दिष्टं तदेव मुख्यतया ज्ञातव्यम्. उपपादनीयं च सन्दिग्धम्. तत्र “ब्रह्मणा विपश्चिता” इति सन्दिग्धं सर्वज्ञं ब्रह्म.

तस्य हि फलत्वं वाक्ये न उपपाद्यते. फलन्तु सर्वैः स्तुतः आनन्दः. अभ्यासात् स्तुतत्वम् इति अवोचाम. शिरःपाण्यादिकन्तु स्तुत्यर्थमेव पुरुषविधत्वाय. लोके हि अन्तर्भूतं बहिः वेष्टितं च तदाकारं भवति.

जीवो अत्र मुख्यः, कर्तृत्वेन व्यपदेशात्. सच वस्तुतो हंसरूपः. पुरुषाधिकारकं हि शास्त्रम्. तेन पुरुषशरीरे तदाकारः सर्वं फलं प्राप्नोति. अतः पुरुषं हंसरूपेण अनुवर्णयति.

पञ्चस्वपि शारीरः आत्मा जीवः एकएव. तत्र अन्नमये निःसन्दिग्धत्वात् "तस्यैषएव आत्मा" इति न उच्यते. द्वितीयादिषु प्रथमोक्तमेव अतिदिश्यते. तत्र अन्नमये हस्तेन प्रदर्शयन्निव निःसन्दिग्धं व्याख्यातम्. तदन्तरो हि प्राणः आन्तरव्यवहारकारणम्, बल-भोजन-विसर्गादिषु उपयोगात्. तस्य सञ्चारः आकाशे परिनिष्ठितः पृथिव्याम्. एवं लौकिकव्यवहारार्थं बाह्याभ्यन्तरभेदेन द्वयम्.

तदनु वैदिकव्यवहारः. स च मनोमयः पुरुषः. आदेशः कर्मचोदना. ब्राह्मणानि सशेषाणि. अथर्वाङ्गिरसे ब्रह्मकर्मत्वात् प्रतिष्ठा.

तदनु नानाविधयागादिसाधनवतः फलं विज्ञानमयः. तत्र श्रद्धा आपः. तृतीयाध्यायेतु अयम् अर्थो विस्तरेण वक्ष्यते. यथोक्तकर्तृत्वात् क्रममुक्तिः.

ऋतसत्यौ प्रमीयमाणानुष्ठीयमानौ धर्मौ योगश्च मुख्यत्वाद् आत्मा. अधोभागो महर्लोकः. तादृशस्य ततो अर्वाक् संसृत्यभावात्. ततोऽपि ब्रह्मविदः आनन्दमयः फलम्. तस्य स्वरूपस्य एकत्वाद् धर्मभेदेन शिरःपाण्यादि निरूप्यते. तस्य मुख्यतया प्रीतिविषयत्वं धर्मः तच्छिरः मोदप्रमोदौ अपरिनिष्ठित-परिनिष्ठितौ आनन्दातिशयौ. आनन्दस्तु स्वरूपम्. साधनरूपत्वात् ब्रह्म पुच्छम् इति. श्लोकौतु सच्चिदंशबोधकौ केवलानन्दत्वपरिहाराय.

अपरौतु श्लोकौ माहात्म्यज्ञापनाय वाग्गोचरागोचरभेदेन. अवान्तरानन्दास्तु सर्वे तस्मात् न्यूनतया तदुत्कर्षत्वबोधनाय. तस्मात् सर्वत्र प्रपाठके मान्त्रवर्णिकमेव प्रतीयते. अतो मुख्योपपत्तेः विद्यमानत्वेन आनन्दमयः परमात्मैव. 'च'कारो मध्ये प्रयुक्तो विधिमुखविचारेण अधिकरणसम्पूर्णत्व-बोधकः॥14॥

निषेधमुखेन चतुःसूत्र्या इदमेव अधिकरणं पुनः विचार्यते सुदृढत्वाय. इदम् अत्र आकूतम् : जीवएव आनन्दमयो भवतु, फलस्य पुरुषार्थत्वात्. सः ब्रह्मविद् आनन्दमयो भवति इति स्वर्गादिसुखवद् अलौकिकमेव रूपम् आनन्दमयं जीवस्य फलभूतम् इति प्राप्ते अभिधीयते.

नेतरोऽनुपपत्तेः॥15॥

इतरो जीवो न. आनन्दमयो न भवति. कुतः? अनुपपत्तेः. जीवस्य फलरूपत्वमात्रेण आनन्दमयत्वं न उपपघते. तथा सति तस्य स्वातन्त्र्येण जगत्कर्तृत्वे अत्यलौकिकमाहात्म्यवत्त्वेन निरूपणं न उपपद्यते. अतो न जीवः आनन्दमयः॥15॥

भेदव्यपदेशाच्च॥16॥

इतोऽपि न जीवः आनन्दमयः. यतो भेदेन व्यपदिश्यते. "रसं ह्येवायं लब्ध्वा आनन्दीभवति" (तैत्ति.उप.2।7) इति. आनन्दो अस्य अस्ति इति आनन्दी. "एष ह्येव आनन्दयाति" (तैत्ति.उप.2।7) इति. आनन्दयति इति अर्थः. 'च'करात् सूत्रद्वयेन जीवो न आनन्दमयः इति निरूपितम्॥16॥

तर्हि जडो भवतु आनन्दमयः. न, आन्तरत्वाद् न कार्यरूपो भवति किन्तु कारणरूपः. सः स्वमते नास्ति इत्येव. मतान्तरेतु प्रकृतिः भवेत् तद् निवारयति.

कामाच्च नानुमानापेक्षा॥17॥

जडा प्रकृतिः नास्ति इति कारणत्वेन निराकृतैव. अथ एतद् वाक्यान्यथानुपपत्या सत्त्वपरिणामरूपा कल्प्येत. सा कल्पना न उपपद्यते. कुतः? कामात्. आनन्दमयनिरूपणानन्तरं "सो अकामयत" (तैत्ति.उप.2।6) इति श्रूयते. सः कामः चेतनधर्मः. अतः चेतनएव आनन्दमयः इति. 'च'कारात् "स तपो अतप्यत" (तैत्ति.उप.2।6) इत्यादिः. अतो अनुमानपर्यन्तम् अर्थम् अबोधयद् वाक्यं न तिष्ठति इति अर्थः॥17॥

अस्मिन्नस्य च तद्योगं शास्ति॥18॥

इतश्च न जडः आनन्दमयः. अस्मिन् आनन्दमये अस्य जीवस्य च "आनन्दमयम् आत्मानम् उपसङ्क्रामति" (तैत्ति.उप.2।8) इति तेन रूपेण योगं शास्ति. फलत्वेन कथयति इति. न हि जीवस्य जडापत्तिः युक्ता. "ब्रह्मैव सन् ब्रह्माप्येति" (बृहदा.उप.3।4।6) इतिवद् अस्यापि अर्थः. तस्मात् न अयं जीवो, नापि जडः. पारिशेष्याद् ब्रह्मैव इति सिद्धम्.

ये पुनः अधिकरणभङ्गं कुर्वन्ति, तेषाम् अज्ञानमेव. यतः तैरपि आनन्दमयः कः पदार्थः इति वक्तव्यम्. न तावज् जीवः, तस्य ब्रह्मज्ञानफलत्वेन "ब्रह्मणा विपश्चिता" इति आनन्दमयस्य उक्तवात्. अथ जडः स्वर्गवत् तदा किम् आश्रितः इति वक्तव्यम्. जडाश्रितत्वे कर्मफलमेव स्यात्. ज्ञानस्यापि अवान्तरफलम् इति चेद्, न. तर्हि किम् आनन्दात् तस्य अतिरिक्तं फलं भविष्यति. जडचिद्रूपतायाः पूर्वमेव विद्यमानत्वात्. "अस्यैव आनन्दस्य अन्यानि भूतानि मात्राम् उपजीवन्ति" (बृहदा.उप.4।3।32) इति श्रुतिविरोधश्च. पुच्छत्वेन ब्रह्मवचनात् प्रद्वेषः इति चेत्, तर्हि "स एको ब्रह्मण आनन्दः" (तैत्ति.उप.2।8) इति अत्रापि षष्ठ्या भेदनिर्देशाद् ब्रह्मणः परमपुरुषार्थत्वं न अङ्गीकुर्यात्.

उपक्रमादिसर्वविरोधश्च पूर्वमेव प्रतिपादितः. यद्यपि अधिकरणम् अन्यथारचितं "ब्रह्म पुच्छम्" इति. तत्र न पुच्छस्य ब्रह्मत्वं प्रतिपाद्यते, येन अन्यथासमाधानं भवेत् किन्तु ब्रह्मणः पुच्छत्वम् इति. पूर्वन्यायेन "इदं पुच्छं प्रतिष्ठा" इतिवत्. तत्र श्रुतिबाधो ब्रह्मणापि अशक्यः.

मौर्ख्यं च एतत्. आनन्दमयस्यैव ब्रह्मत्वे न कोऽपि दोषः स्यात्. आनन्दमयस्य अब्रह्मत्वं परिकल्प्य तत्पुच्छत्वेन ब्रह्म वेदबोधितम् इति ज्ञात्वा तत्समाधानार्थं यतमानो

महामूढः इति विषयफलयोः किं मुख्यम् इत्यपि अनुसन्धेयम्. पुच्छत्वोक्तिस्तु पूर्वभावित्वाय. अतएव ज्ञानविषयत्वं प्रतिष्ठा च. आनन्दमयो ब्रह्मण्येव प्रतिष्ठिते इति. अत्र अवयवावयविभावो भाक्तः इतितु युक्तम्, प्राणमयादीनामपि तथात्वात्. अन्तःस्थितस्य बाह्यानुरोधेन तथात्वम् इति सर्वं सुस्थम्॥18॥
इति प्रथमाध्याये प्रथमपादे पञ्चमम् आनन्दमयाधिकरणम्॥5॥

## अन्तस्तद्धर्मोपदेशात्॥19॥ (1।1।6)

"अथ य एषोऽन्तरादित्ये हिरण्यमयः पुरुषो दृश्यते हिरण्यस्मश्रुः हिरण्यकेशः आप्रणखात् सर्वएव ससुवर्णः.(6) तस्य यथा कप्यासं पुण्डरीकमेवम् अक्षिणि तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः. उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदः(7)... इति अधिदैवतम्" (छान्दो.उप.1।6।6-8). "अथ अध्यात्मम्" (तत्रैव 1।7।1) अपि "अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते" (तत्रैव 1।7।5) इत्यादिः.

तत्र संशयः. किम् अधिष्ठातृदेवताशरीरम् आहोस्वित् परब्रह्म इति, ब्रह्मणो वा शरीरम्? इति. तदर्थम् इदं विचार्यते : 'हिरण्मय'शब्दः सुवर्णविकार-वाची, आहोस्वित् प्रकाशसाम्येन आनन्दवाची इति. "ब्रह्मविदाप्नोति परम्" (तैत्ति.उप.2।1) इति उपक्रम्य आनन्दमयस्य फलत्वम् उक्त्वा द्वितीयोपाख्याने "स यश्चायं पुरुषे यश्चासावादित्ये स एकः स य एवंविद्" (तैत्ति.उप.3।10) इति साधनस्य "आनन्दमयम् आत्मानम् उपसङ्क्रम्य" (तैत्ति.उप.3।10) इति फलं श्रुतम्. तत्र सवितरि विद्यमानस्य अब्रह्मत्वे फलं न उपपद्यते इति विचारारम्भः. तत्र 'हिरण्मय'शब्दो विकारवाची. केशनखादयः च उच्यन्ते शरीरधर्माः. "मृता वा एषा त्वग् अमेध्या यत् केशश्मश्रु" (कठोप.3) इति शरीरम् अन्तरा न उपपद्यते. परिच्छेदश्च आधिदैविकादिवचनञ्च बाधकम्. अतः सर्वथा तच्छरीरम् इतितु मन्तव्यम्. चाक्षुषत्वाच्च. इन्द्रियवत्त्वञ्च श्रूयते "यथा कप्यासं पुण्डरीकमेवम् अक्षिणी तस्य" (छान्दो.उप.1।6।7) इति. कपेः आसः आसनम्. आरक्तं तस्य आसनं भवति इति. असभ्यतुल्यता च. अतो देहेन्द्रिययोः विद्यमानत्वाद् जीवः कश्चिद् अधिकारी सूर्यमण्डलस्थः इति गम्यते. फलं तत्सायुज्यद्वारा इति. अथ उच्येत "एष सर्वेभ्यः पाप्मभ्य उदितः" (छान्दो.उप. 1।6।7) इति अपहतपाप्मत्वादिधर्मश्रवणात्. पूर्वदोषस्यापि विद्यमानत्वाद् ब्रह्मणएव केनचित् निमित्तेन शरीरपरिग्रहः इति.

तस्य च शरीरस्य कर्मजन्यत्वाभावाद् अपहतपाप्मत्वादिः सङ्गच्छते. सुवर्णशरीरत्वमपि अलौकिकत्वाद् ब्रह्मणएव सङ्गच्छते. शरीरवद् इन्द्रियस्यापि परिग्रहः. वर्णमात्रपरिग्रहात् न असभ्यता. स्थावरापेक्षया जङ्गमस्य उत्कृष्टत्वात् स्थावरावयवोपमानवद् जङ्गमावयवोपमानं स्थावरस्यापि इति सर्वब्रह्मभावाय श्रुत्युक्तत्वाच्च. तस्माद् ब्रह्मणएव इदं शरीरम् इति एवं प्राप्ते, उच्यते : अन्तस्तद्धर्मोपदेशात्.

अन्तः दृश्यमानः परमात्मैव. कुतः? तद्धर्मोपदेशात्. तस्य ब्रह्मणो धर्माः उदित्यादिधर्माः उपदिश्यन्ते. "स एष सर्वेभ्यः पाप्मभ्य उदितः" (छान्दो. उप.1।6।7) इति. अयम् आशयः : ब्रह्म कारणं, जगत् कार्यम् इति स्थितम्. तत्र कार्यधर्माः यथा कारणे न गच्छन्ति तथा कारणासाधारणधर्माऽपि कार्ये. तत्र अपहतपाप्मत्वादयः कारणधर्माः ते यत्र भवन्ति तद् ब्रह्म इत्येव अवगन्तव्यम्, बलिष्ठत्वात् कारणधर्मस्य. नामतुल्यतामात्रम् उभयेषामपि धर्माणाम्. ते श्रुत्येकसमधिगम्या ब्रह्मणि. लोके प्रमाणान्तरमपि प्रवर्तते. अतः सर्वरसादयो ब्रह्मनिष्ठाएव धर्माः. स्थूलत्वादयस्तु ये ब्रह्मणि निषिध्यन्ते. अस्थूलादिवाक्येषु ते कार्यधर्माः. "अणोरणीयान्" (कठोप.2।20) इत्यादिषु कारणधर्माएव. अतः एकोऽपि असाधारणो धर्मो विद्यमानः शिष्टान् सन्दिग्धानपि ब्रह्मधर्मानेव गमयति. इममेव श्रुत्यभिप्रायम् अङ्गीकृत्य सर्वत्र ब्रह्मवाक्यनिर्णयम् आह सूत्रकारः. तथाच श्रुतिव्यतिरिक्तस्थले तथैव अवगन्तव्यम्. 'अनन्तम्' इति अनन्तमूर्तिता च ब्रह्मणः प्रतिज्ञाता. अन्यथा "गुहायां निहितम्" इति विरुद्ध्येत. तस्मात् साकारं तादृशमेव ब्रह्म.

ब्रह्मणः शरीरम् इतितु सर्वथा असङ्गतम्. सर्वकर्तुः ब्रह्मणः का वा अनुपपत्तिः स्याद् येन स्वस्यापि शरीरं कल्पयेत् किन्तु लीलया व्यामोहनार्थम् अन्यथा भासयेत् नटवत्.

तस्माद् वेदातिरिक्तेऽपि उपपत्तिपूर्वकं यत्र ब्रह्मधर्मः तद् ब्रह्म इति मन्तव्यम्. ब्रह्मतु वेदैकसमधिगम्यं यादृशं वेदे प्रतिपाद्यते तादृशमेव इति असकृद् अवोचाम. प्रकृतेऽपि 'हिरण्मयः' इत्यत्र 'य'कारलोपः छान्दसः. अतो न द्व्यच्. 'हिरण्य'शब्दः आनन्दवाची, लोकेऽपि तस्य आनन्दसाधकत्वात्. अतः केशादयोऽपि सर्वे आनन्दमयाएव. तादृशमेव ब्रह्मस्वरूपम् इति मन्तव्यम्. अतएव "ध्येयः सदा सवितृमण्डलमध्यवर्ति नारायणः सरसिजासनसन्निविष्टः, केयुरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुः धृतशङ्खचक्रः" (आन. हृद.55) इत्यत्रापि 'वपुः' स्वरूपम्. "माया ह्येषा मया सृष्टा" (महाभा.12। 339।45) इत्यादिभगवद्वाक्यं भगवन्मायया भगवन्तम् अन्यथा पश्यन्ति इति आह, नतु भगवानेव मायिकः इति. शरीरे सति जीवत्वमेव इति निश्चयः. अतो ब्रह्मधर्मोपदेशात् सूर्यमण्डलस्थः परमात्मैव॥19॥

भेदव्यपदेशाच्चान्यः॥20॥

इतोऽपि सूर्यमण्डलस्थः परमात्मा, भेदव्यपदेशात्. "य आदित्ये तिष्ठन् आदित्याद् अन्तरो, यम् आदित्यो न वेद, यस्य आदित्यः शरीरं, य आदित्यम् अन्तरो यमयति, एष त आत्मा अन्तर्यामी अमृतः" (बृहदा.उप.3।7।9) इति श्रुत्यन्तरे आधिदैविकं सूर्यमण्डलाभिमानिभ्यां भेदेन निर्दिष्टम्. यद्यपि तत्र आकारो न श्रूयते तथापि 'हिरण्मय'वाक्येन एकवाक्यत्वात् सर्वत्र साकारमेव ब्रह्म इति मन्तव्यम्.

अन्तर्यामिब्राह्मणे चत्वारो अर्थाः उच्यन्ते : सर्वत्र तिष्ठन् तद्धर्मैः न सम्बध्यते. सर्वमुक्तिपरिहाराय स्वधर्मैः तद् न बध्यते. स्वलीलासिद्ध्यर्थं तच्छरीरम् इति. तस्य नियमनं

तदर्थम् इति. 'च'काराद् धर्माः उच्यन्ते.

तस्मात् सर्वविलक्षणत्वाद् अन्यएव, न अभिमानी. उपचारव्यावृत्त्यर्थम् 'अन्य'पदेन उपसंहारः. ब्रह्मत्वे सिद्धे ज्ञानं वा उपासना वा इति, न अस्मत् सिद्धान्ते कश्चन विशेषः. कारणे कार्यधर्मारोपस्तु अयुक्तएव. कार्येपुनः कारणधर्माधिकरणत्वेन उपासना अभेदात्. फलाय इति सर्वत्र व्यवस्थितिः ॥20॥

इति प्रथमाध्याये प्रथमपादे षष्ठम् अन्तस्तद्धर्माधिकरणम्॥6॥

"अस्य लोकस्य का गतिः इति आकाश इति होवाच. सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते. आकाशं प्रत्यस्तं यन्ति. आकाशो ह्येव एभ्यो ज्यायान् आकाशः परायणम्" (छान्द.उप.1।9।1) इति.

तत्र संशयः : भूताकाशो ब्रह्म वा? इति. ननु कथम् अत्र सन्देहः? 'आकाश'-'व्योम'शब्दाः बह्मण्येव प्रयुज्यन्ते ब्रह्मप्रकरणे. कार्यनिरूपणेतु महाभूतवचनः. यथा "आकाश आनन्दो न स्यात्"(तैत्ति.उप.2।7) "परमे व्योमन् प्रतिष्ठित"(तत्रैव 3।6) इत्यादि. "आत्मनः आकाशः सम्भूतः" (तत्रैव 2।1) इति कार्यनिरूपणम्. अतः प्रकरणादेव सन्दिग्धनिर्णये किमिति सूत्रारम्भः. जन्मादिलक्षणसूत्रेण च अयम् अर्थो निर्णीतः. अन्यथा 'ब्रह्म'शब्देऽपि सन्देहः स्यात्, महाभूतवेदादिवाचकत्वात्. तस्मात् प्रकरणादेव परिज्ञानं भविष्यति इति चेद्, उच्यते. असन्दिग्धे प्रकरणे तथैव निर्णयः. इह पुनः प्रकरणमपि सन्दिग्धम्. अतो विचारः.

अवान्तरविद्यायां पर्यवसितप्रकरणवद् अस्यापि प्रकरणस्य भूताकाशएव पर्यवसानम् इति लोकभाष्यन्यायेन आकाशो भौतिकएव इति पूर्वपक्षः. तत्र आह,

## आकाशस्तल्लिङ्गात्॥21॥ (1।1।7)

आकाशः परमात्मैव. कुतः? तल्लिङ्गात्. श्रुति-लिङ्गादयो नियामकत्वेन पूर्वतन्त्रवद् इहापि गृह्यन्ते. लिङ्गं श्रुतिसामर्थ्यम् एकवाक्यता च सर्वासां ब्रह्मश्रुतीनाम्. तत्र ब्रह्मैव जगत्कारणम् इति निःसन्दिग्धेषु सिद्धम्. सर्वशब्दवाच्यत्वं ब्रह्मण्येव. तत्र वाक्यार्थापेक्षया पदार्थस्य दुर्बलत्वाद् वाक्यार्थः सर्वगतित्वादिः. तद्वाक्यार्थान्यथानुपपत्त्या 'आकाश'पदार्थो ब्रह्म इति 'सर्व'शब्दवाच्यत्वाच्च न लक्षणा, मुख्यत्वाच्च. यावत् मुख्यपरत्वं सम्भवति तावद् न कस्यापि वेदान्तस्य अपरब्रह्मपरत्वम् इति मर्यादा. तस्माद् "यदेष आकाश आनन्दो न स्यात्" (तैत्ति.उप.2।7) इतिवद् अत्रापि आकाशो ब्रह्मैव इति सिद्धम्॥21॥

इति प्रथमाध्याये प्रथमपादे सप्तमम् तल्लिङ्गाधिकरणम्॥7॥

## अतएव प्राणः॥22॥ (1।1।8।22)

"प्रस्तोतर्या देवता प्रस्तावम् अन्वायत्ता" (छान्दो.उप.1।11।4) इति उपक्रम्य श्रूयते. "कतमा सा देवतेति प्राण इति होवाच. सर्वाणि ह वा इमानि भूतानि प्राणमेव

अभिसंविशन्ति प्राणमभ्युज्जहते. सैषा देवता प्रस्तावम् अन्वायत्ता" (छान्दो.उप.1।11।5) इति. तत्र संशयः. प्राणः आसन्यो ब्रह्म वा? इति. पूर्वपक्षसिद्धान्तौ पूर्ववदेव इति अतिदिशति.

ननु अधिकरणानां न्यायरूपत्वात् सर्वत्र गमिष्यति, किमिति अतिदिश्यते इति. उच्यते. प्राणस्य मुख्यस्यापि सर्वभूतसंवेशनं स्वापादौ श्रुतावेव उपपाद्यते "यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति" (शत.ब्राह्म.10।3।3।6) इत्यादिना. तत्र यथा प्राणविद्यायाः न ब्रह्मपरत्वम् एवमेव अस्यापि न ब्रह्मपरत्वमिति न न्यायेन प्राप्नोति. अतो अतिदिशति. अनेन च अयम् अतिरिक्तो न्यायः आपादितः. यत्रैव प्रकरणे ब्रह्मपरत्वे कल्प्यमाने न किञ्चिद् बाधकं तत्रैव ब्रह्मपरत्वं कल्पनीयम् इति, नतु अन्यस्मिन् सम्भवे तत्परत्वम् इति. अतएव तल्लिङ्गात् 'प्राण'शब्दवाच्यं ब्रह्म इति॥22॥

इति प्रथमाध्याये प्रथमपादे अष्टमम् अतिदेशाधिकरणम्॥8॥

## ज्योतिश्चरणाभिधानात्॥23॥ (1।1।9)

इदम् आमनन्ति "अथ यदतः परो दिवो ज्योतिः दीप्यते, विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषु उत्तमेषु लोकेषु इदं तावद्यदिदम् अस्मिन् अतः पुरुषे ज्योतिः" (छान्दो.उप.3।13।7) इति. तत्र 'ज्योतिः'शब्देन प्राकृतं ज्योतिः आहोस्वित् ब्रह्मैव? इति संशयः.

अत्र असाधारणब्रह्मधर्माभावात् पूर्वपक्षः. सिद्धान्तेतु चरणस्य ब्रह्मधर्मत्वम् इति "एतावानस्य महिमा. अतो ज्यायांश्च पूरुषः. पादोऽस्य सर्वा भूतानि त्रिपाद् अस्य अमृतं दिवि" (छान्दो.3।12।6) इति पूर्ववाक्यम्. "गायत्री वा इदं सर्वं भूतं यदिदं किञ्च" (छान्दो.उप.3।12।1) इति गायत्र्याख्यब्रह्मविद्यां वक्तुं तस्याः पादचतुष्टयं प्रतिपाद्य ब्रह्मणः चतुष्पात्त्वम् उक्तम्. पुरुषसूक्तेऽपि आश्रमचतुष्टयस्था जीवाः पादत्वेन उक्ताः. तथा प्रणवब्रह्मविद्यायामपि अकारोकार-मकार-नादवाच्याः चत्वारः पादाः विश्व-तैजस-प्राज्ञ-तुरीयाः उक्ताः. "तद् विष्णोः परमं पदम्" (कठोप.1।3।9) इति च. "ब्रह्म पुच्छम्" (तैत्ति.उप.2।5) इति च. सत्यकामब्राह्मणेतु स्पष्टाएव ब्रह्मणः चत्वारः पादाः निरूपिताः. अतः सच्चिदानन्दरूपस्य प्रत्येक-समुदायाभ्यां चतूरूपत्वम्. तत्र केवलानां कार्यत्वमेव. चतुर्थपादस्यतु ब्रह्मत्वम्.

तत्रापि षड्विधत्वप्रतिज्ञानाद् भूतपृथिवीशरीराणां परिचायकत्वेन षड्विधत्वम् अनिरूप्य हृदयस्य षड्विधत्वं निरूपयन् "तस्य ह वा एतस्य" (छान्दो.उप.3।13।1) इत्यादिना पञ्च देवपुरुषान् निरूप्य तेषां द्वारपालत्व-ज्ञानानन्तरम्, "अथ यद् अतः परो ज्योतिर्दीप्यते" (छान्दो.उप.3।13।7) इति चतुर्थपादस्य षष्ठविधत्वप्रतिपादनात्. अतः चतुर्थपादे पञ्च पुरुषाः, ततः परो दिवो ज्योतिः षष्ठः. तस्यैव सर्वत्र दीप्यमानत्वं निरूप्य तदेव अन्तःपुरुषे उपसंहरति. "तस्मात् पूर्वं त्रिपाद् अस्य अमृतं दिवि" (छान्दो.उप.3।12।6)

इति उक्तत्वाद् अस्य त्रिपात्सम्बन्धि अमृतम् उपरितनलोकेषु इति. अतो अत्र चतुर्थः पादो निरूप्यते इति सिद्धम्. अतः पादानां ब्रह्मधर्मत्वाद् ज्योतिषो ब्रह्मत्वम् इति ब्रह्मधर्मनिर्णयार्थम् इदम् अधिकरणं चरणानाम् औपचारिकत्व-व्यावृत्त्यर्थम्. एतद् निर्णयेन प्रणवादिविद्या निर्णीता वेदितव्याः॥23॥

छन्दोऽभिधानान्नेति चेन्न
तथा चेतोर्पणनिगदात् तथा हि दर्शनम्॥24॥

ननु न अत्र ब्रह्म चतुष्पाद् निरूपितं किन्तु गायत्री छन्दः. "गायत्री वा इदं सर्वं भूतं यदिदं किञ्च" (छान्दो.उप.3।12।1) इति उपक्रम्य तामेव भूत-पृथिवी-शरीर-हृदय-भेदैः व्याख्याय, "सैषा चतुष्पदा षड्विधा गायत्री. तदेतद् ऋचाभ्युक्तम्" (छान्दो.उप.3।12।5) "एतावान् अस्य महिमा" (छान्दो. उप.3।12।6) इति. तस्यामेव व्याख्यानरूपायां गायत्र्याम् उदाहृतो मन्त्रः कथम् अकस्माद् ब्रह्म चतुष्पाद् अभिदध्यात्. "यद्वै तद् ब्रह्म" (तत्रैव 3।12।7) इति 'ब्रह्म'पदमपि छन्दसः प्रकृतत्वात् तत्परमेव अवगन्तव्यम्. शब्दस्यापि ब्रह्मवाचकत्वसिद्धेः ब्रह्मोपनिषद् इतिवत् शब्दब्रह्म इति च. तस्मात् छन्दसएव पादाभिधानाद् न ब्रह्मधर्माः पादाः इति चेद्, न एषः दोषः. तथा चेतो अर्पणनिगदात्. तथा तेन द्वारेण चेतसो अर्पणं निगद्यते. "गायत्री वा इदं सर्वं यद् इदं किञ्च" (छान्दो.उप.3।12।1) इति. न हि वर्णसमाम्नायरूपस्य सर्वत्वम् अनुपचारेण सम्भवति. यथा सूचीद्वारा सूत्रप्रवेशः तथा गायत्रीद्वारा बुद्धिः तत्प्रतिपाद्ये ब्रह्मणि प्रविशेद् इति. कुतः एतद् एवं प्रतिपाद्यते? इति, तत्र आह 'तथा हि दर्शनम्'. तथा तेनैव प्रकारेण दर्शनं ज्ञानं भवति. स्थूला बुद्धिः न आहत्यैव ब्रह्मणि प्रविशेद् इति. एतेन सर्वाः मन्त्रोपासना व्याख्याताः. हि युक्तश्च अयम् अर्थो लोके स्वतो यद् न प्रविशति तद् उपायेन विशति इति. नतु अदृष्टद्वारा, दृष्टे सम्भवति अदृष्टकल्पनायाः अन्याय्यत्वात्. तस्मात् पादाः ब्रह्मधर्माः॥24॥

भूतादिपादव्यपदेशोपपत्तेश्चैवम्॥25॥

किञ्च, भूतादयो अत्र पादाः व्यपदिश्यन्ते. भूत-पृथिवी-शरीर-हृदयानि चत्वारि. न हि एतानि गायत्र्याः पादाः भवितुम् अर्हन्ति. ब्रह्मपरिग्रहेतु उपपद्यन्ते. यावद् मुख्यम् उपपद्यते तावद् न गौणं कल्पनीयम्. अयम् अर्थः : पूर्वहेतौ छन्दसोऽपि पादाः व्यपदेशाद् भवन्ति. तथापि ब्रह्मणएव युक्ताः इति. पुरुषसूक्ते "एतावान् अस्य" (ऋग्सं.10।90।3) इति अस्य ब्रह्मपरत्वात्. अस्मिन् वाक्येतु गायत्र्याः पादाएव न उपदिष्टाः किन्तु ते ब्रह्मणएव पादाः इति. तद्वाचकत्वेन गायत्र्याम् उपचारेण उपसंहारः. 'च'काराद् अर्थाः न शब्दस्य पादाः भवन्ति किन्तु अर्थस्यैव इति. तस्माद् ब्रह्मवाक्यत्वे भूतादीनां पादत्वम् उपपद्यते न अन्यथा इति. तस्मात् पादानां ब्रह्मधर्मत्वम्॥25॥

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्॥26॥

"पादोऽस्य विश्वा भूतानि" (छान्दो.उप. 3।12।6) सर्वाणि भूतानि एकः पादः. पादत्रयम् अमृतं दिवि इति एको अर्थः.

पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः।
अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु॥15॥

इति अपरः. पुरुषसूक्तानुरोधे द्वितियएव अर्थः. प्रथमे तावद्, ननु 'दिवि'इतिमन्त्रे सप्तम्याः आधारत्वं प्रतिपाद्यते. 'अतःपरम्' इत्यत्र पञ्चम्याः अनाधारत्वम् अतः उपदेशभेदात् पूर्वोक्तपरामर्शाभावाद् न ज्योतिषो ब्रह्मत्वम् इति चेद्, न एषः दोषः, उभयस्मिन्नपि अविरोधात्. मन्त्रे दिव्येव उक्तम्. अस्मिन् वाक्ये सर्वत्र उच्यते. सर्वत्र विद्यमानस्य दिवि विद्यमानत्वं न विरुध्यते. 'अतः'शब्देन न तत्र अविद्यमानत्वं किन्तु ततोऽपि अन्यत्र सत्त्वं बोध्यते तस्मात् सप्तमी-पञ्चमी-निर्देशो न विरुद्धः. द्वितीयेतु, ननु मन्त्रे 'अमृत'पदम् अत्र 'ज्योतिः'पदम् अतः उपदेशभेदात् चतुर्थश्च पादो हृदयम्. 'अतः'शब्दाच्च सर्वस्माद् भेदः प्रतिपाद्यते. अतः उपदेशभेदाद् न एकवाक्यता अस्मिंश्च वाक्ये चरणाभावात्. स्वरूपासिद्धो हेतुः इति चेत्, न एषः दोषः उभयस्मिन् 'ज्योतिः'पदे 'अमृत'पदे च प्रयुज्यमाने एकार्थत्वाद् न विरोधः. पादत्रयम् उपरितनलोकेषु चतुर्थं सर्वत्र इति. अन्यथा वैजात्यं पादानाम् आपद्येत परिच्छेदविरोधश्च. अतो 'अमृत-ज्योतिः'शब्दयोः एकार्थत्वेन विरोधाभावाद् एकवाक्यत्वम्. अतो अत्र चरणसद्भावात् तस्य च ब्रह्मधर्मत्वात् ज्योतिर्ब्रह्मैव॥26॥

इति प्रथमाध्याये प्रथमपादे नवमं ज्योतिश्चरणाधिकरणम्॥9॥

## प्राणस्तथानुगमात्॥27॥ (1।1।10)

अस्ति कौषीतकिब्राह्मणोपनिषदि इन्द्र-प्रतर्दनसंवादः, "प्रतर्दनो ह वै दैवोदासिः" (कौषी.उप.3।1) इत्यादिना "एष लोकपाल एष लोकाधिपतिरेष लोकेशः स म आत्मेति विद्यात् स म आत्मेति विद्यात्" (तत्रैव 3।8) इत्येतदन्तम्. तत्र वरदाने "मामेव विजानीहि एतदेव अहं मनुष्याय हिततमं मन्ये" इत्युपक्रम्य त्वाष्ट्रवधादिना आत्मानं प्रशस्य स्वोपासनायाः पापाभावं फलत्वेन प्रतिपाद्य कस्त्वम् इति विवक्षायां "प्राणो वा अहम् अस्मि प्रज्ञात्मानं मामायुरमृतम् इत्युपास्व" (तत्रैव 3।2) इति उक्त्वा आयुषः प्राणत्वम् उपपाद्य अमृतत्वञ्च प्राणस्य उपपाद्य, "प्राणेन ह्येव अमुष्मिन् लोके अमृतत्वम् आप्नोति" (तत्रैव 3। 2) इति अमृतत्वं योगेन प्रतिपादयति. तत्र सन्देहः, प्राणः किम् आसन्यो ब्रह्म वा? इति.

"अतएव प्राणः" (ब्रह्मसू.1।1।23) इत्यत्र 'प्राण'शब्दमात्रे सन्देहः. अत्र अर्थेऽपि सन्देहः. बाधकञ्च वर्ततइति पृथग् अधिकरणारम्भः. तत्र साधकासाधारणधर्मस्य अभावाद् बाधकानां विद्यमानत्वाद् न ब्रह्मत्वम् इति पूर्वपक्षः.

सिद्धान्तस्तु चतुर्भिः सूत्रैः प्रतिपाद्यते. तत्र प्रथमं साधकधर्ममम् आह एकेन. त्रिभिः बाधकनिराकरणम्. प्राणः परमात्मा भवितुम् अर्हति. कुतः? तथा अनुगमात्. तथाहि, पौर्वापर्येण पर्यालोच्यमाने वाक्ये पदार्थानां समन्वयो ब्रह्मप्रतिपादनपरः उपलभ्यते. उपक्रमे तावद् "वरं वृणीष्व" इति इन्द्रः प्रतर्दनोक्तः परमपुरुषार्थं वरम् उपचिक्षेप. "त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" (कौषी.उप.3।1) इति. तस्मै हिततमत्वेन उपदिश्यमानः प्राणः कथं परमात्मा न स्यात्. न हि परमात्मनो अन्यद् हिततमम् अस्ति, परमानन्दस्वरूपत्वात्. पापाभावश्च ब्रह्मविज्ञानएव. "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" (मुण्ड.उप.2।2।8) इति श्रुतेः. प्रज्ञात्मत्वञ्च तस्यैव सम्भवति. उपसंहारेपि "आनन्दो अजरोमृतः" (कौषी.ब्रह्म.3।8) इति, "एष लोकाधिपतिः" (तत्रैव 3।8) इत्यादि च. तस्मात् सर्वत्रानुगमात् प्राणो ब्रह्म॥27॥

न वक्तुरात्मोपदेशाद् इति चेद्
अध्यात्मसम्बन्धभूमा ह्यस्मिन्॥28॥

बाधकम् आह. यद् उच्यते "प्राणो ब्रह्म" इति, तद् न, कुतः? वक्तुः आत्मोपदेशात्. वक्ता हि इन्द्रः आत्मानम् उपदिशति "मामेव विजानीहि" इति उपक्रम्य "प्राणो वा अहम् अस्मि प्रज्ञात्मानं मामायुरमृतम् इत्युपास्व" (कौषी. ब्राह्म.3।2) इति. स एष प्राणो वक्तुः आत्मत्वेन उपदिश्यमानः कथं ब्रह्म स्यात्? तथाच वाचो धेनुत्वोपासनवद् देवतायाः प्राणत्वोपासना बोध्यते.

अन्ये च ब्रह्मधर्माः प्राणस्तावकाइति कथम् अस्य ब्रह्मोपाख्यानत्वम्? इति चेद्, न, अध्यात्मसम्बन्धभूमा हि अस्मिन्. अस्मिन् प्रकरणे अध्यात्मसम्बन्धः. आत्मानम् अधिकृत्य यः सम्बन्धः. 'आत्म'शब्दो ब्रह्मवाची. वस्तुतो जीवस्य ब्रह्मत्वाय तथावचः. तस्य सम्बन्धः. तद्धर्माः. तेषां बाहुल्यं प्रतीयते. "एष लोकपालः" (कौषी.उप.3।8) इत्यादि. यावद् यथाकथञ्चिदपि ब्रह्मप्रकरणत्वं सिध्यति, तावद् अन्यप्रकरणत्वम् अयुक्तम् इति 'हि'शब्दार्थः. प्राणस्य प्रज्ञानात्मत्वम्. स्वान्त्र्येण आयुर्दातृत्वम्. "न वाचं विजिज्ञासीत वक्तारं विद्यात्" (कौषी.ब्राह्म.3।8) इति च उपक्रम्य, "तद् यथा रथस्यारेषु नेमिः अर्पिता, नाभावरा अर्पिता एवमेव एता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणे अर्पिताः. स एष(प्राणएव) प्रज्ञात्मानन्दो अजरो अमृतो न साधुना कर्मणा" (तत्रैव 3।8) इत्यादिविषयेन्द्रियव्यवहारे अरनाभिभूतं प्रत्यगात्मानमेव उपसंहरति. "स म आत्मेति विद्यात्" (तत्रैव 3।8) इति च उपसंहारः. तस्माद् अध्यात्मसम्बन्धबाहुल्याद् ब्रह्मोपदेशएव अयम्॥28॥

तर्हि बाधकस्य का गतिः? इत्यतः आह.
शास्त्रदृष्ट्या तूपदेशो वामदेववत्॥29॥

पूर्वसूत्रेण अपहृतम् अत्र परिहरति 'तु'शब्दः. अयं दोषो व्यवहारदृष्ट्योपदेशे. "अहं ब्रह्म"इति आर्षेण दर्शनेन तु उपदेशः. ननु "तत्त्वमसि" (छान्दो.उप.6।9।4), "अयमात्मा ब्रह्म" (बृहदा.उप.2।5। 19) इति वाक्येषु जीवस्य ब्रह्मत्वं बोध्यते तत्र "प्रत्यधिकारं शास्त्रप्रवृत्तिः" इतिन्यायेन स्वात्मनएव ब्रह्मत्वावगतिः मुख्या, न प्रतर्दनस्य इन्द्रजीवब्रह्मत्वावगतिः उपासनं वा पुरुषार्थाय. अतः शास्त्रदृष्टिरपि न एवंविधा. केवलस्य चैतन्यमात्रस्य तादृशे ब्रह्मण्यैक्यावगतिः विरोधात् "तत्त्वमस्या"-दिवाक्यार्थो अध्यवसीयते. नतु ब्रह्मधर्माः जीवे वक्तुं शक्यन्ते इति आशङ्क्य परिहरति. वामदेववत्. "तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे 'अहं मनुरभवं सूर्यश्च' " (तत्रैव 1।4।10) इति. यएव प्रत्यबुध्यते सः सर्वं भवति. तत्र सर्वेषां सर्वभावे सर्वानन्त्यप्रसङ्गात् सर्वम् एकमेव इति वक्तव्यम्.

ततः कारणलयएव सर्वभावः इति "मनुरभवं सूर्यश्च" इति अवयुत्यानुवादो अनुपपन्नः. तत्र यथा ज्ञानावेशात् सर्वधर्मस्फूर्तिः एवम् अत्रापि ब्रह्मावेशाद् उपदेशः इति. त्वाष्ट्रवधादयो ब्रह्मधर्माएव, तदावेशेन क्रियमाणत्वात्. "ननु एष वज्रः तव शक्र तेजसा हरेर्दधीचेः तपसा च तेजितः, तेनैव शत्रुं जहि विष्णुयन्त्रितः" (भाग.पुरा.6।11।20) इति वृत्रवचनं श्रीभागवते. तस्माद् युक्तं ब्रह्मधर्मवचनम्. ननु "स्वाप्ययसम्पत्योः अन्यतरापेक्षमाविष्कृतं हि" (ब्रह्मसू.4।4।16) इति सूत्रे सुषुप्तौ ब्रह्मसम्पतौ च ब्रह्मधर्माविर्भावो नतु अन्यद् इति कथम् एवम् इति चेद्, मा एवम्. उपदेशभावनादिष्वपि कदाचिद् उत्तमाधिकारिविषये ब्रह्मप्राकट्यम् इति अङ्गीकर्तव्यम्, "मय्येव सकलं जातम्" (कौषी.उप.1।19) इत्यादि-वाक्यानुरोधात्. "इहैव समवनीयन्ते प्राणाः" (बृहदा.उप.3।12। 11). "ब्रह्मैव सन् ब्रह्माप्येति" (तत्रैव 4।4।6) इत्यपि आविर्भावापेक्षम्. तस्य च प्रायिकत्वाद् न सूत्रे फलत्वम् आह. जीवन्मुक्तानामपि परममुक्तेः वक्तव्यत्वाच्च.

असम्प्रज्ञातसमाधाविव आविर्भावदशायामेव शरीरवियोगे वियोजका-भावाद् वागादिमात्रं लीयते. तस्य च प्राप्तत्वादेव न अर्चिरादिगतिः. तथापि प्रायिकत्वाद् न सूत्र-गीतादिषु तद्वचनम्. सगुण-निर्गुणभेदेन नियमवचनन्तु अप्रामाणिकमेव. ब्रह्मवादे गुणानङ्गीकाराच्च. तस्माद् युक्तम् उक्तं शास्त्रदृष्ट्यातु उपदेशः इति॥29॥

जीवमुख्यप्राणलिङ्गाद् न इति चेद्
नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्॥30॥

अन्यद् बाधकद्वयम् आशङ्कते. ननु यद्यपि ब्रह्मधर्माः भूयांसः प्रकरणे श्रूयन्ते. तद्वद् जीवधर्माः मुख्यप्राणधर्माश्च बाधकाः सन्ति. "न वाचं विजिज्ञासीत वक्तारं विद्याद्" (कौषी.ब्राह्म.3।8) इत्यादि. अत्र हि वागादि-करणाध्यक्षस्य जीवस्य विज्ञेयत्वम् अभिधीयते. "अथ खलु प्राणएव प्रज्ञात्मेदं शरीरं परिगृह्य" (तत्रैव 3।3) इति शरीरधारणं मुख्यप्राणधर्मः. "मा मोहम् आपद्यथा, अहमेव एतत् पञ्चधा आत्मानं प्रविभज्य एतद् बाणम् अवष्टभ्य विधारयामि" (प्रश्नोप.2।3) इति श्रवणात्.

“यो वै प्राणः सा प्रज्ञा या प्रज्ञा स प्राणः” (कौशि.ब्राह्म.3।3) इति जीवमुख्यप्राणवाच्यत्वे प्रज्ञा-प्राणयोः सहवृत्तित्वाद् उपचारो युज्यते, उत्क्रान्तिश्च, नतु सर्वथा विलक्षणस्य ब्रह्मणः. तस्माज् जीवमुख्यप्राण-लिङ्गयोः विद्यमानत्वाद् न ब्रह्मप्रकरणम् इति चेद्, न, उपासात्रैविध्यात्. अयम् अर्थः. किम् अत्र चोद्यते? जीवमुख्यप्राणलिङ्गाद् ब्रह्मधर्माणां जीवपरत्वं, त्रयाणामपि स्वतन्त्रत्वं वा, लिङ्गद्वयस्यापि ब्रह्मधर्मत्वम् उच्यताम् इति वा. आद्यः पूर्वमेव परिहृतः. न हि ब्रह्मधर्मा अन्यपरत्वेन परिणेतुं शक्या इति. द्वितीये दूषणम् आह, उपासात्रैविध्यात्. तथा सति उपासनं त्रिविधं स्यात्. तद् वाक्यभेदप्रसङ्गाद् न युक्तम्. तृतीयेतु उपपत्तिः उच्यते. जीवधर्मा ब्रह्मणि न विरुध्यन्ते, आश्रितत्वात्. जीवस्यापि ब्रह्माधारत्वात् तद्धर्मापि भगवदाश्रिताएव. ‘इह’ इति उभयत्र सम्बन्धो ब्रह्मवादे. मुख्यप्राणेतु तद्योगात्. तेन योगः तद्योगः तस्मात्. प्राणधर्माः भगवति न विरुध्यन्ते. प्राणस्य भगवत्सम्बन्धात् तद्धर्माणामपि भगवत्सम्बन्धात्. अथवा वक्तृत्वादयो न जीवधर्माः किन्तु ब्रह्मधर्माएव. जीवे आश्रितत्वाद् भासन्ते, “परात्तु तच्छ्रुतेः” (ब्रह्मसू.2।3।41) इतिन्यायात्. प्राणेऽपि तथा. स्वाप्यय-सम्पत्त्योः जीवस्य ब्रह्माश्रितत्वम्. आध्यात्मिकाधिदैविकरूपत्वाद् न संयोगः. प्राणस्यतु संयोगएव. तस्मात् सर्वे धर्माः ब्रह्मणि युज्यन्ते.

सहोत्क्रमस्तु क्रिया-ज्ञानशक्त्योः भगवदीययोः देहे सहैव स्थानं सहोत्क्रमणम् इति भगवदधीनत्वं सर्वस्यापि बोध्यते. ननु “प्राणस्तथानुगमाद्” (ब्रह्मसू.1।1।27) इति ‘प्राण’शब्देन ब्रह्मैव प्रतिपादितं तत् कथं धर्मयोः उत्क्रमणम्? इति चेद्, अत्र धर्म-धर्मिणोः एकत्व-पृथक्त्व-निर्देशयोः विद्यमानत्वात्. “प्राणो वा अहम् अस्मिन् प्रज्ञात्मा” (कौषी.ब्राह्म.3।2) इति. अत्र क्रियाज्ञानशक्तिमान् निर्दिष्टः. तदनु एकैकस्य धर्मप्रशंसा, “यो वै प्राणः सा प्रज्ञा, या प्रज्ञा स प्राणः” (तत्रैव 3।4) इति उपसंहारान्तम्. पुनः तयोरेव उत्क्रमण-प्रवेशाभ्यां “सह ह्येव अस्मिन् शरीरे वसतः सहोत्क्रामतः” (तत्रैव 3।4) इति उपक्रम्य सुषुप्ति-मूर्च्छा-मरणेषु प्राणाधीनत्वं सर्वेषाम् इन्द्रियाणाम् उक्त्वा आसन्यव्यावृत्यर्थं प्रज्ञया ऐक्यं प्रतिपाद्य उपसंहरति. पुनः ज्ञानशक्तेः उत्कर्षं वक्तुम्, “अथ खलु यथा प्रज्ञायाम्” (तत्रैव 3।3) इत्यारभ्य “न हि प्रज्ञापेतो अर्थः कश्चन सिद्ध्येद्” (तत्रैव 3।3) इत्यन्तेन ज्ञानशक्त्युत्कर्षं प्रतिपाद्य धर्ममात्रत्वनिराकरणाय ज्ञानशक्तिमन्तं भगवन्तं निर्दिशति. “न हि प्रज्ञातव्यम्” (तत्रैव 3।7) इत्यारभ्य “मन्तारं विद्यात्” (तत्रैव 3।8) इत्यन्तेन. तदनु ज्ञानक्रिया-शक्त्योः विषयभूतभूतमात्रारूपजगतो भगवदभेदं प्रतिपादयन् “स एष प्रज्ञात्मानन्दो अजरो अमृतः” (तत्रैव 3।8) इति उपसंहरति ब्रह्मधर्मैः. अतः क्रियाज्ञान-विषयरूपो भगवानेव इति प्रतिपाद्य न तावन्मात्रं ततोऽपि अधिकः इति एकोपासनैव विहिता. तस्माद् जड-जीवरूपत्वात् सर्वात्मकं ब्रह्मैव इति महावाक्यार्थः सिद्धः॥30॥

इति प्रथमाध्याये प्रथमपादे दशमम् अनुगमाधिकरणम्॥10॥

इतिश्रीवेदव्यासमतवर्ति-श्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये
प्रथमस्य अध्यायस्य प्रथमः पादः

## प्रथमो अध्यायः

## द्वितीयः पादः

### सर्वत्र प्रसिद्धोपदेशात्॥1॥ (1।2।1।1)

समन्वये प्रथमे अध्याये सर्वेषां वेदान्तानां ब्रह्मणि समन्वयो वक्तव्यः. तत्र उद्गीथाद्युपासनावाक्यानां मुख्यवाक्येषु फलोपकार्यङ्गत्वम्. ब्रह्मवाक्यानां पुनः निःसन्दिग्धानां समन्वयः स्वतःसिद्धः. सन्दिग्धानि द्विविधानि शब्दतो अर्थतश्च.

तदर्थञ्च एतद् विचारितम्. ब्रह्मणि व्यवहारो अस्ति कश्चित् न वा? इति. तत्र प्रथमसूत्रएव व्यवहारः स्थापितः. “यतो वाचो निवर्तन्ते” (तैत्ति.उप. 2।4) इत्यादीनां विशेषेण इदमित्थतया निरूपणनिषेधनपरत्वम्, एवमेव कार्यसिद्धेः. अधीतानां ब्रह्मवाक्यानां चतुर्लक्षण्या ब्रह्मपरत्वे सिद्धे श्रवणं सिध्यति. श्रुतस्य कालान्तरेऽपि असम्भावना-विपरितभावना-निवृत्त्यर्थं पूर्वस्थितानाम् अङ्गानाम् अनपेक्षितानाम् उद्वापेन अन्येषाम् अपेक्षितानाम् आवापेन तस्यैव अर्थस्य निर्धारणे मननं भवति.

ततोऽपि एवं ध्यानादि-समाध्यन्तरूप-निदिध्यासनरूपं मनसि सर्वतो-निवृत्तव्यापारे स्वयमुपलब्ध-निजसुखानुभवरूपं ब्रह्म. इदमेव ब्रह्मज्ञानम् इति. अतः तादृशस्य अनुभवैकवेद्यत्वाद्युक्तम् अविषयत्वं, पाकभोजनतृप्तिवत्.

अतः श्रवणाङ्गमीमांसायां माहात्म्यज्ञानफलायां भगवद्वाक्यानाम् अन्यपरत्वे अन्यवाक्यानां च भगवत्परत्वे दिव्यधर्मादिव्यधर्मव्यत्यासेन वैपरीत्यं फलम् आपद्येत. तदर्थं दिव्यधर्मनिर्द्धारो द्वितीयाधिकरणे विचारितः. वेदाएव वाचकाः, अलौकिकमेव कर्म इति. ततः पूर्णालौकिकत्वाय विधिनिषेधमुखेन अधिकरणद्वयम्, समन्वयेक्षतिरूपम्. तदनु प्रथमे पादे शाब्दसन्देहो निवारितो निश्चितार्थे. तत्रापि प्रथमं प्रत्ययसन्देहो निवारितो द्वयेन. प्रकृतिसम्बन्धोऽपि अधिकरणत्रयेण. पुनः अन्तिमम् अधिकरणं संश्लेषनिराकरणाय. एवं प्रथमे पादे शब्दसन्देहो निवारितः.

ये ('ये तु पुनः' इति पुरु.पाठः) पुनः क्वचित् सगुणनिर्गुणभेदं प्रतिपादयन्ति, ते स्वयमेव स्वस्य ब्रह्मजिज्ञासानधिकारं बोधयन्ति, ब्रह्मवादे साङ्ख्यानामिव गुणानाम् अनङ्गीकारात्. भौतिकगुणानाम् असम्बन्धार्थमेव हि अध्यायारम्भः. अन्यथा सर्वस्यापि तत्कारणत्वेन तत्सम्बन्धस्य विद्यमानत्वाद् अन्यनिराकरणेन तत्प्रतिपादकत्व-निर्धारकाधिकरणानां वैयर्थ्यमेव.

अर्थसन्देहनिराकरणार्थं द्वितीयाद्यारम्भः. तत्र अर्थो द्विविधो जीवजडात्मकः प्रत्येकसमुदायाभ्यां त्रिविधः. तत्र प्रथमं जीवपुरःसरेण सन्देहाः निर्वायन्ते.

इदम् आम्नायते "सर्वं खल्विदं ब्रह्म, तज्जलान् इति शान्त उपासीत. अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत. मनोमयः प्राणशरीरः" (छान्दो.उप.3।14।1,2) इत्यादि. तत्र वाक्योपक्रमे "सर्वं खल्विदं ब्रह्म" इति सर्वस्य ब्रह्मत्वं प्रतिज्ञाय, 'तज्जलान्' इति सर्वविशेषणं हेतुत्वेन उक्त्वा तत्त्वेन उपासनम् उक्तम्. नच अयं शमविधिः, वाक्यार्थे लक्षणाप्रसङ्गात्, कारणत्वेन सामान्यतएव सिद्धत्वाच्च. अतः सर्वजगतो ब्रह्मत्वेन उपासनम् उक्तम्. इदमेव पुराणादिषु विराट्त्वेन उपासनम्. अतःपरम् अग्रिमवाक्यार्थे सन्देहः. "क्रतुं कुर्वीत" इति. क्रतुः धर्मो यज्ञः इतियावत्. तस्य स्वरूपं "मनोमयः प्राणशरीरः" इति. उपासनाप्रकरणत्वाद् उपासनैव एषा. तत्र 'मनोमयः' इति प्रमाणभूतो वेदः उक्तः. 'प्राणशरीरः' इति कार्यकारणयोः अभेदोपचारः, अग्रे सत्यसङ्कल्पादिधर्मवचनात्. किम् अयं विज्ञानमयो जीवो ब्रह्मत्वेन उपास्य उत ब्रह्मैव अन्तर्यामी, यः पुराणेषु सूक्ष्मः उक्तः?

तत्र पूर्ववाक्ये जडस्य जगतो ब्रह्मत्वेन उपासनस्य उक्तत्वाद् जीवस्यापि ब्रह्मत्वेन उपासनमेव युक्तं, नतु आहत्यैव ब्रह्मवाक्यं भवितुम् अर्हति, "विज्ञानं ब्रह्म चेद् वेद" (तैत्ति.उप.2।5) इति शाखान्तरे स्पष्टत्वाच्च. तस्मात् कार्यकारणयोः अभेदाद् जीवएव ब्रह्मत्वेन उपास्यः इति एवं प्राप्ते, उच्यते सर्वत्र प्रसिद्धोपदेशात्.

"अथ खलु" इत्यादि ब्रह्मवाक्यमेव. कुतः? सर्वत्र प्रसिद्धोपदेशात्. 'कुर्वीत' इति उपदेशो, नतु उपासना. तत्र परमशान्तस्य सर्वस्य जगतो ब्रह्मत्वेन उपासनया शुद्धान्तःकरणस्य सर्ववेदान्तप्रसिद्धब्रह्मोपदेशएव युक्तो मननरूपो नतु क्वचित् सिद्धस्य जीवस्य उपासना. शाखान्तरेतु अग्रे आनन्दमयस्य वक्तव्यत्वात् तथायुक्तम्, नतु इह तथा. तस्माद् आनन्दरूप-प्राणशरीररूपो वाक्यार्थः॥1॥

ननु "क्रतुमयः पुरुषः" इति यथासङ्कल्पम् अग्रिमदेहकथनात् लोकान्तरभाविफलार्थम् अन्योपासनैवतु युक्ता, नतु ब्रह्मज्ञानस्य तादृशं फलं युक्तम् इति आशङ्क्य परिहरति

विवक्षितगुणोपपत्तेश्च॥2॥

विवक्षिता लोकान्तरे तादृशरूपप्राप्तिः, सा प्रकृतेऽपि उपपद्यते, भगवत्स्वरूपलाभात् सारूप्यलाभाद् वा. नच व्याप्तिः उक्तेति अधमप्राप्त्युपायो युक्तः.

सत्यसङ्कल्पादिवचनं च ब्रह्मवाक्यत्वपोषकम् इति 'च'कारार्थः॥2॥

ननु एतावतापि न एकान्ततो ब्रह्मवाक्यत्वम् उपपत्तेः उभयत्रापि तुल्यत्वाद् इति आशङ्क्य परिहरति

अनुपपत्तेस्तु न शारीरः॥3॥

नच प्राणशरीररूपो जीवो भवति, तिरोहितानन्दत्वेन निराकारत्वात्. अध्यासेन तथात्वेतु अनुपास्यत्वमेव. इदानीमेव उपासकस्यापि तथात्वात्. नच प्राणादेः लौकिकत्वम्, उपदेशानर्थक्यप्रसङ्गात्. अतः आनन्दरूप-प्राणशरीर-रूपत्वाभावाद् न वाक्यार्थो जीवः. पूर्वपक्षस्य अत्रैव निवृत्तत्वात् 'तु'शब्दः. विज्ञानमयेतु प्राप्ताप्राप्तविवेकेन धर्मस्यैव उपासना॥3॥

ननु प्राप्तव्यतादृशरूपफलाभिप्रायं भविष्यति इति परिहरति

कर्मकर्तृव्यपदेशाच्च॥4॥

"एतमितः प्रेत्याभिसम्भवितास्मि" इति, "यस्य स्याद् अद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्यः" (छान्दो.उप.3।14।4) इति अग्रे फलवाक्यम्. एतं प्राणशरीररूपं कर्मत्वेन ध्येयत्वेन प्राप्यत्वेन च व्यपदिशति. कर्तृत्वेन च शारीरं व्यपदिशति. नच भजनीयरूपाकथने तादृशं फलं सिध्यति इति 'च'कारार्थः अधिकरणसम्पूर्णत्वद्योतकश्च॥4॥

इति प्रथमाध्याये द्वितीये पादे प्रथमं सर्वत्र प्रसिद्धोपदेशाधिकरणम्॥1॥

## शब्दविशेषात्॥5॥ (1।2।2।)

इदम् आम्नायते : "यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाक-तण्डुलो वा एवम् अयम् अन्तरात्मन् पुरुषो हिरण्मयः" (शत.ब्राह्म.10।6।3।2) इति. तत्र संशयः. हिरण्मयः पुरुषः किं जीवः उत ब्रह्म? इति. उपक्रमबलीयस्त्वे जीवः, उपसंहारबलीयस्त्वे ब्रह्म इति.

यत्र एकस्य अन्यपरत्वेन एकार्थता सम्भवति तद्बलीयस्त्वम् इति सिद्धं पूर्वतन्त्रे. तत्र चतुर्विधभूतनिरूपणार्थं जीवस्यैव आराग्रमात्रस्य अन्तर्हृदये प्रतिपादकम् इदं वचनं, फलतो हिरण्मयत्वम् इति. नतु एतादृशाभाससमानत्वं ब्रह्मणो युक्तम् अतो जीवप्रतिपादकमेव इदं वाक्यम् इति प्राप्ते, उच्यते शब्दविशेषात्.

सः हिरण्मयः पुरुषो न जीवस्य फलमपि, तत्प्राप्तेरेव फलत्वात्. नापि अयं नियमः तस्यामेव मूर्तौ लयः इति. 'अतः'शब्देनैव विशेषस्य उक्तत्वाद् न हिरण्मयः पुरुषो जीवः॥5॥

ननु हृदये विद्यमानत्वाद् अभिमान्येव जीवो युक्तः इति चेत्, तत्र आह
स्मृतेश्च॥6॥

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" (भग.गीता 18।61) इति. ननु सर्ववेदानां यद् निःश्वासत्वं तस्य भगवतो वाक्यं कथं स्मृतिः? इति. उच्यते. "तं त्वौपनिषदं पुरुषं पृच्छामि" (बृहदा.उप.3।9।26) इति श्रुतेः केवलोपनिषद्वेद्यं ब्रह्म, न प्रमाणान्तरवेद्यम्. ततश्च अर्जुनस्य शिष्यरूपेण प्रपन्नस्य पुष्टिभक्तत्वाभावाद्, भगवद्वाक्ये निर्विचिकित्सविश्वासाभावाद्, रथित्वेनैव स्थाप्यत्वाद्, न तादृशाय तादृशदेशकालयोः उपनिषदाम् अवक्तव्यत्वाद्, गुरुरूपतादृशरूपं निःश्वसितवेदोद्गमजनकं स्मृत्वा, तदर्थमपि स्मृत्वा, भगवान् पुरुषोत्तमो वाक्यानि उक्तवान् स्मृतिरूपाणि. ततो ब्रह्मविचारे तान्यपि उदाहृत्य चिन्त्यन्ते. पुनश्च भगवान् तदधिकारेण ब्रह्मविद्यां निरूप्य स्वकृपालुतया, "सर्वगुह्यतमम्" (भग.गीता 18।64) इत्यादिना भक्तिप्रपत्ती एव उक्तवान्. अतो अङ्गत्वेन पूर्वं सर्वनिर्णयाः उक्ताः इति अध्यवसेयम्, तथैव अर्जुनविज्ञानात् "करिष्ये वचनं तव" (तत्रैव 18।73) इति. 'च'कारात् तन्मूलभूतनिःश्वासोऽपि उच्यते. व्यासस्यापि भगवज्ज्ञानांशत्वाद् अदोषः॥6॥

उपक्रमबलीयस्त्वम् आशङ्क्य परिहरति
अर्भकौकस्त्वात् तद्व्यपदेशाच्च न
इति चेन्न निचाय्यत्वाद् एवं व्योमवच्च॥7॥

ननु व्यापकस्य ईश्वरस्य हृदयदेशस्थितिः अयुक्ता, व्रीह्यादिरूपत्वञ्च. अतो अर्भकम् अल्पकम् ओको हृदयस्थानं यस्य तत्त्वाद् व्रीह्यादीतुल्यत्वाच्च न परमात्मा वाक्यार्थः इति चेद्, न, निचाय्यत्वात्. पूर्वं प्रथमदूषणं परिहरति. हृदये ज्ञातुं शक्यते इति तदायतनत्वेन प्रतिपाद्यते.

निदिध्यासनानन्तरं हि साक्षात्कारः तदन्तःकरणएव इति निचाय्यत्वम्. भक्तौतु बहिरपि इति विशेषः. द्वितीयं परिहरति. एवं व्योमवत्. एवं व्रीह्यादितुल्यतया यत् प्रतिपादनं चतुर्विधभूतान्तरत्वख्यापनाय. यथा "चत्वार उपरवाः प्रादेशमात्राः" (आप.श्रो.सू.11।11।1) इति तथा तद्हृदयाकाशे प्रकटस्य सच्चिदानन्दस्वरूप-सर्वतःपाणिपादान्तस्य तत्स्वरूपम् इति. पूर्वपक्ष-सिद्धान्तयोः 'च'कारद्वयम् एतादृशवाक्यान्तरे पूर्वपक्ष-सिद्धान्तयोः आधिक्योपपत्तिसमुच्चयार्थम्. तेन, "अतएव प्राणः" (ब्रह्मसू.1।1।22) इतिवद् अधिकरणान्तरमपि सूचितम् इति॥7॥

सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्॥8॥

बाधकम् आशङ्क्य परिहरति. यदि सर्वेषां हृदये भगवान् जीववत् तिष्ठेत् तदा जीवस्येव तस्यापि सुखदुःखसाक्षात्कारः तत्साधनादिपरिग्रहश्च प्राप्नोति इति चेद्, न,

वैशेष्यात्. विशेषस्य भावो वैशेष्यं तस्मात्. सर्वरूपत्वम् आनन्दरूपत्वं स्वकर्तृत्वं विशेषः. तद्भावो ब्रह्मणि वर्तते, न जीवइति जीवस्यैव भोगो, न ब्रह्मणः इति. 'वैशेष्य'पदाद् अयम् अर्थः सूचितः. अपेक्षितएव भोगो, न अनपेक्षितः इति. नतु तस्य भोगाभावएव, अग्रिमाधिकरणविरोधात्. यथा इन्द्रियाधिष्ठातृदेवानाम्. "तत्त्वमस्या"दिवाक्येन जीवस्यापि तथात्वे तस्यापि तद्वदेव भविष्यति॥8॥

इति प्रथमाध्याये द्वितीयपादे द्वितीयं शब्दविशेषाधिकरणम्॥2॥

कठवल्लीषु पठ्यते "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः, मृत्युः यस्योपसेचनं क इत्था वेद यत्र सः" (कठोप.1।2।25) इति. अत्र वाक्ये ब्रह्म-क्षत्रयोः ओदनत्वं वदन् 'यच्'छब्दार्थस्य भोक्तृत्वम् आह. तत्र संशयः. किं जीवो ब्रह्म वा? इति. सच्चिदानन्दरूपत्वं सर्वोपास्यत्वं पूर्वाधिकरणद्वयेन सिद्धम्. सर्वभोक्तृत्वं साधयति. ब्रह्म-क्षत्रयोः अशक्यवधयोः सर्वमारकस्य च मृत्योः भक्षयिता जीवो न भवत्येव इति कथं सन्देहः इति चेद्, उच्यते. ओदनोपसचेन-रूपकत्वाद् जीवधर्मत्वम्, स्थानाज्ञानाच्च. नहि सर्वगतस्य स्वहृदयेऽपि प्रतिभासमानस्य "क इत्था वेद यत्र सः" (तत्रैव 1।2।25) इति अज्ञानम् उपपद्येत('उपपद्यते' इति पुरु.पाठः). अलौकिकसामर्थ्याच्च सन्देहः.

तत्र निषिद्धत्वात् लौकिकभोजनवद् निरूप्यमाणत्वात् स्थानाज्ञानाच्च कश्चिद् उपासनोपचितालौकिकसामर्थ्यो महादेवादिः अत्ता भविष्यति. नतु तद्विरुद्धधर्माः भगवान् भवितुम् अर्हति, अक्लिष्टकर्मत्वादिधर्मवान्. तस्माद् जीवएव उपासनोपचितमहाप्रभावो वाक्यार्थः इति एवं प्राप्ते अभिधीयते.

## अत्ता चराचरग्रहणात्॥9॥ (1।2।3)

अत्ता भगवानेव. कुतः? चराचरग्रहणात्. चरं सर्वप्राणिवधार्थं परिभ्रमन् मृत्युः. अचरं ब्रह्मक्षत्ररूपं कस्यापि अचाल्यम्. तयोः अत्ता न जीवो भवितुम् अर्हति. "यत्रापि अतिशयो दृष्टः सः स्वार्थान् अतिलङ्घनात्" इति-न्यायात्. अस्मदादिप्रतिपत्त्यर्थन्तु लौकिकवद् वचनं भोक्तृत्वाय. प्रलयकर्तृत्वाद् न अयुक्तत्वम्. सर्वत्र विद्यमानस्यापि अज्ञायमानत्वात् फलतः स्थानाज्ञानम् उक्तम्. ब्रह्मक्षत्रयोरपि मोक्षापेक्षितत्वात् मृत्युसम्बन्धमात्रेण भगवति भोक्तरि प्रवेशार्थं योग्यरूपत्वमेवौदनत्वम्. प्राणानां तत्रैव समबलयात् मृत्युरपि तत्रैव लीनो अग्रे जन्ममरणाद्यभावाय भगवत्येव प्रविशति. तस्माद् अस्मिन् वाक्ये ब्रह्मक्षत्रमृत्यूनां भोग्यत्वेन ग्रहणाद् अत्ता भगवानेव इति सिद्धम्॥9॥

ननु किमिति एवं प्रतिपाद्यते? पूर्वपक्षन्यायेन यमो अन्यो वा मृत्युं साधनीकृत्य स्ववशे सर्वं करोतीति जीववाक्यमेव किं न स्याद् इत्यतः आह.

प्रकरणाच्च॥10॥

प्रकरणं हि इदं ब्रह्मणः. "न जायते" (कठोप.1।2।18) इत्यारभ्य "आसीनो दूरं व्रजति" (कठोप.1।2।20) इत्यादिना माहात्म्यं वदन् अन्ते च ब्रह्मक्षत्रं च इति आह. अतः प्रकरणानुरोधात् पूर्वोक्तप्रकारेण ब्रह्मवाक्यत्वम् इति. अन्यथा प्रकृतहानाप्रकृतकल्पने स्याताम् इति 'च'कारार्थः.
इति प्रथमाध्याये द्वितीयपादे तृतीयम् अत्ता चराचरेति अधिकरणम्॥3॥

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्॥11॥ (1।2।4)

तस्यैव अग्रे पठ्यते. "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे, छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेता" (कठोप. 1।2।20) इति.

किम् इदं ब्रह्मवाक्यम् आहोस्विद् अन्यवाक्यम्? इति. अस्य वाक्यस्य उत्तरशेषत्वे जीवप्रकरणपठितत्वार्थं ('...पठितत्वात् न ब्रह्म..." इति पुरु.पाठः) ब्रह्मवाक्यत्वं पूर्वशेषत्वेतु ब्रह्मवाक्यम् इति हि प्रकरणनिर्णयः. मध्ये पाठाद् एवं सन्देहः. अर्थविचारेतु द्विवचननिर्देशात् पूर्वशेषत्वे बद्ध-मुक्तजीवौ भविष्यतः. उत्तरशेषत्वेतु इन्द्रियमनसी. उभयथापि न बह्मवाक्यं, द्वयोः मुख्यत्वेन प्रतिपादनात्. ब्रह्मवाक्येऽपि न प्रयोजनसिद्धिः.

अथ मन्यते, उपनिषत्पाठाद् अन्यत्र अनिर्धाराद् जीवब्रह्मपरत्वेऽपि तयोः अभेदाद् ब्रह्मपरतैव वाक्यस्य युक्तः इति. तथापि कस्य निर्णायकत्वं, प्रकरणस्य अर्थस्य वा? इति. उभयोरपि सन्दिग्धत्वाद् अयुक्तो विचारः इति चेद्, उच्यते.

सन्देहवारकं शास्त्रं पदशक्त्यातु निर्णयः।
जीवाद् उत्कर्षशब्देन द्वयोर्वाक्येऽपि न क्षतिः॥16॥

'गुहा-तप'शब्दाभ्याम् इति अर्थः. "ऋतं पिबन्तौ" (कठोप.1।2।1) इत्यत्र एवं संशयः. किं जीवद्वयं निरूपयति आहोस्विद् जीवब्रह्मणी वा? इति. तत्र ब्रह्मप्रकरणस्य सामान्यत्वाद् "यस्तु विज्ञानवान् भवति" (कठोप.1।3।5) इति अग्रे विद्वदविद्वतोः वक्तव्यत्वात् तदर्थम् उभयोः प्रथमनिर्देशः उचितः. मन्त्रेऽपि, ऋतं स्वर्गापवर्गलक्षणं सुखम्. मार्गद्वयस्यापि विहितत्वात् सुकृतलोकत्वम्. गुहा तत्त्वविचारो हृदयं वा. जात्यपेक्षयातु एकवचनम्. परमपरार्ध्यं सत्यलोकः, तत्र उभयोः भोगात्. अविद्यया पिहितप्रकाशत्वाद् अविदुषः छायात्वम्. ब्रह्मज्ञानेन अतिप्रकाशत्वाद् आतपत्वं विदुषः. अतएव विदुषः स्वरूपं ब्रह्मविदो वदन्ति. पञ्चाग्नयः त्रिणाचिकेताः चेतरम्. इन्द्रिय-मनसोस्तु अचेतनत्वाद् न वाक्यार्थसङ्गतिः. वाक्यार्थयोगे हि विशेषणनिर्णयः. तस्माद् बद्धमुक्तजीवपरतया उपपन्नत्वात् तत्प्रकरणपाठाद् न ब्रह्मवाक्यम् इति. एवं प्राप्ते, उच्यते "गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्".

गुहां प्रविष्टावात्मानौ गुहा हृदयाकाशः. तत्र सकृद् एकस्मिन् प्रविष्टौ जीवपरमात्मानावेव. "अनेन जीवेन आत्मनानुप्रविश्य" (छान्दो.उप.6।3।2) इति उभयोः

प्रवेशश्रवणात्. न हि एकस्मिन् हृदयाकाशे जीवद्वयं प्रवेष्टुम् अर्हति. अर्थस्तु एवं सम्भवति पूर्वाधिकरणे (ब्रह्मसू.1।2।9,10) यथाभिलषितभोगो भगवति साधितः. प्रकारान्तेणापि "ऋतं सत्यं परं ब्रह्म" (महाना.उप.12।1) इति ऋतसत्ययोः ब्रह्मत्वप्रतिपादनात् स्वरूपामृतपातारौ. सुकृतमपि ब्रह्मैव. "तस्मात् तत् सुकृतम् उच्यते" (तैत्ति.उप.2।7) इति श्रुतेः सएव लोकः. उपचारात् षष्ठी.

अक्षरं वा, परमपरार्ध्योपरि तत्रत्यानां परिदृश्यमानत्वात्. छाया प्रतिसारूप्यं सायुज्यं गतस्य जीवस्यापि तथात्वात्. ततोऽपि विशिष्टं ब्रह्म प्रकटानन्दत्वाद् आतपः परोक्षवादः. काण्डत्रयेऽपि तद्वाद इति त्रयाणां ग्रहणम्. अतो युक्तएव अयम् इति 'हि'शब्दार्थः.

ननु अप्रकृतत्वात् कथम् एवम्? इति तत्र आह 'तद्दर्शनात्'. तयोः दर्शनं तद्दर्शनं तस्माद् जीवब्रह्मणोः प्रतिपादनीयत्वात्. "या इयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके, नायमस्तीति चैके, एतद् विद्याम् अनुशिष्टः त्वयाहम्" (कठोप.1।1।20) इति जीवः पृष्टः. "अन्यत्र धर्माद् अन्यत्राधर्माद् अन्यत्रास्मात् कृताकृतात्, अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वद्" (तत्रैव 1।2।14) इति ब्रह्मापि पृष्टम्. तत्र ब्रह्म निरूप्य जीवं निरूपयन् उभयोः तुल्यत्वेन महाभोगं निरूपयन् फलार्थं मध्ये स्वरूपं कीर्तयति. अतो ब्रह्मवाक्यमेव इति सिद्धम्॥11॥

विशेषणाच्च॥12॥

विशेषणानि पूर्वोक्तानि जीव-ब्रह्मणोरेव सङ्गतानि. अग्रिमं वा "आत्मानं रथिनं विद्धि" (कठोप.1।3।3), "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" (तत्रैव 1।3।9) इति जीवप्राप्यं ब्रह्म आह. अतः उभयोरेव सर्वव्यावृत्त्या कथनाद् अग्रिमग्रन्थपर्यालोचनयापि इदं ब्रह्मवाक्यमेव. "द्वा सुपर्णा" (मुण्ड.उप.3।1) इति निःसन्दिग्धम्. 'च'कारः प्रकरणोक्त-सर्वोपपत्ति-समुच्चयार्थः॥12॥
इति प्रथमाध्याये द्वितीयपादे चतुर्थं गुहाम्प्रविष्टौ इति अधिकरणम्॥4॥

## अन्तर उपपत्तेः॥12॥ (1।2।5)

"य एषो अक्षिणि पुरुषो दृश्यते. एष आत्मा इति होवाच एतद् अमृतम् अभयमेतद् ब्रह्मेति, तद् यद्यपि अस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति" (छान्दो.उप.4।15।1) इत्यादि श्रूयते. तत्र संशयः. प्रतिबिम्बपुरुषस्य ब्रह्मत्वेन उपासनापरम् इदं वाक्यं ब्रह्मवाक्यमेव इति वा. विरुद्धार्थवाचकत्वात् सन्देहः.

तत्र 'दृश्यते' इति वचनात् प्रतिबिम्बएव अयम्. ब्रह्मप्रकरणस्य च समाप्तत्वाद् "एषा सौम्य ते अस्मद्विद्या आत्मविद्या च" (छान्दो.उप. 4।14।1) इति उपसंहारदर्शनात्

तत्सिद्ध्यर्थम् उपासनापरतैव वाक्यस्य युक्ता. अविरोधे हि ब्रह्मपरता. उपास्यत्वेन ब्रह्मधर्माणाम् अन्वयो भविष्यति इत्येवं प्राप्ते उच्यते. अन्तरः, अक्षिमध्ये दृश्यते इति उक्तः परमात्मैव. कुतः? उपपत्तेः. उपपद्यते हि तस्य दर्शनम् आर्षम्. सर्वत्र ब्रह्म पश्यन् बहिः सन्निधाने तस्य स्थानस्य उत्कृष्टत्वात् तत्र भगवन्तम् उपदिशति. "लोकं वा व ते अवोचन् अहं तु ते तद् वक्ष्यामि" (तत्रैव 4।14।3) इति महदुपक्रमाच्च. प्रतिबिम्बमात्रस्य च न पुरुषत्वनियमः. तस्माद् विरोधाभावाद् ब्रह्मवाक्यमेव॥13॥

स्थानादिव्यपदेशाच्च॥14॥

"एतं संयद्वाम इत्याचक्षत. एतं हि सर्वाणि वामान्यभिसंयन्ति. एष उ एव वामनीरेष हि सर्वाणि वामानि नयति. एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति" (छान्दो.उप.4।15।4) इति. वामानि कर्मफलानि, तेषामेव मनोहरत्वेन तदर्थं कर्मकरणात्. कर्मफललयः कर्मफलदानञ्च यतः इति स्वर्गापवर्गफल-दातृत्वम् उक्तम्, सर्वलोकेषु भानञ्च. 'एष' इति तमेव अक्षिपुरुषं निर्दिश्य स्थानादि व्यपदिश्यते. न हि प्रतिबिम्बात्मनः स्थानादिव्यपदेशः सम्भवति. 'च'काराद् एतत्तुल्यवाक्यस्यापि अयमेव अर्थः. इन्द्रविरोचनप्रजापतिसंवादे "अथ योऽयं भगवोऽप्सु परिख्यायते" (छान्दो.उप.8।7।4) इति आसुरम्. नतु "य एषोऽक्षिणि पुरुषो दृश्यते" (तत्रैव 4।15।1) इत्यादि. तस्माद् अक्षिपुरुषो ब्रह्मैव॥14॥

सुखविशिष्टाभिधानादेव च॥15॥

ननु किमिति निर्बन्धेन ब्रह्मवाक्यत्वं सम्पाद्यते. उपासनापरत्वे को दोषः? इति आशङ्क्य आह सुखविशिष्टाभिधानात्. "एतद् अमृतम् अभयम् एतद् ब्रह्म" (छान्दो.उप.4।15।1) इति. यदि अत्र उपासना विधीयते "एष आत्मा" (तत्रैव 8।3।4) इति तदा अमृतादिवचनं व्यर्थं स्यात्, तद्धर्माणां पूर्वमेव प्राप्तत्वात्. तस्माद् अमृतम् आनन्दः, अभयं चिद्, ब्रह्म सत्, सच्चिदानन्दरूपः आत्मा इति उक्तं भवति. अतः 'एषः' इति अक्षिपुरुषं निर्दिश्य सुखविशिष्टम् अभिधीयते. सच्चितोः न ब्रह्मख्यापकत्वमिति सुखमेव निर्दिष्टम्. अतः सुखविशिष्टाभिधानादेव ब्रह्मवाक्यम् इति. एषा मुख्योपपत्तिरिति 'एव'कारः. 'च'करात् सदादिभिरपि. तस्माद् बह्मैव अक्षिपुरुषः॥15॥

श्रुतोपनिषत्कगत्यभिधानाच्च॥16॥

स्वरूपतो निर्णीय फलतो निर्णयम् आह. श्रुतोपनिषत्कस्य, श्रुता उपनिषद्विद्या येन तस्य प्रविदो या गतिः देवयानाख्या सा अक्षिपुरुषविदोऽपि उच्यते. "अथ यदु चैवास्मिन् शव्यं कर्म कुर्वन्ति, यदि च नार्चिषमेवाभियन्ति" इति उपक्रम्य "चन्द्रमसो विद्युतं तत्पुरुषो अमानवः स एतान् ब्रह्म गमयति. एष देवपथो ब्रह्मपथः इति एतेन प्रतिपद्यमाना इमं

मानवमावर्तं नावर्तन्ते" (छान्दो.उप.4।15।5) इति ब्रह्मविदोऽपि एषएव मार्गः पुनरावृत्तिरहितः. 'च'कारस्तु उक्तसमुच्चयेन अधिकरणपूर्णत्वबोधकः॥16॥

अनवस्थितेरसम्भवाच्च नेतरः॥17॥

इदमेव अधिकरणं पुनः निषेधमुखेन विचारयति. ननु उपासनापरत्वेऽपि सर्वम् उपपद्यते. तद्धर्मव्यपदेशेनैव उपासनोपपत्तेः. अतः सर्वा उपपत्तयो व्यपदेशिवद्भावेन सङ्गच्छन्ते इत्येवं प्राप्ते उच्यते. इतरो न अत्र वाक्यार्थः. अनवस्थितेः अस्थिरत्वात्. उपदेशकवाक्यत्वात् उपदेष्टुरेव चक्षुर्गतं भवेत्. तथाच वक्तुः दर्शनाभावाद् अनाप्तत्वम्. द्रष्टुः अपगमे च अपगच्छति सद्वितीयेतु सद्वितीयः. उपासनाकाले च सुतराम् अनवस्थितिः. सद्वितीयोपासनायामपि श्रवण-मननयोः भिन्नविषयत्वाद् अनवस्थितिः. वक्तुरेव नियमे गुरोः निर्बन्धेन सुतराम् अनवस्थितिः.

किञ्च. मनसा हि उपासनं कर्तव्यम्. तत्र च असम्भवएव तादृशधर्मवत्त्वं च न सम्भवति. आसुरत्वं च भवेद् इति 'च'कारार्थः. तस्माद् अक्षिस्थाने सहजएव यो भगवान् अस्ति तत्परमेव एतद्वाक्यम् इति सिद्धम्. व्यापकसर्वगतस्य सर्वतःपाणिपादान्तत्वाद् आनन्दमूर्तिः भगवानेव. ब्रह्मवादेतु एषैव मर्यादा. सगुणवादो ब्रह्मवादाज्ञानाद् इति॥17॥
इति प्रथमाध्याये द्वितीयपादे पञ्चमम् अन्तर उपपत्तेः इति अधिकरणम्॥5॥

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्॥18॥ (1।2।6)

"य इमञ्च लोकं परञ्च लोकं सर्वाणि च भूतान्यन्तरो यमयति" (बृहदा. उप.3। 7।1) इति उपक्रम्य श्रूयते. "यःपृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीम् अन्तरो यमयति एष त आत्मा अन्तर्यामी अमृतः" (बृहदा.उप.3।7।2) इत्यादि.

तत्र अधिदैवम् अधिलोकम् अधिवेदम् अधियज्ञम् अधिभूतम् अध्यात्मं च कश्चिद् अन्तरवस्थितो यमयिता अन्तर्यामी इति श्रूयते. तत्र संशयः. किम् अन्तर्याम्यधिदैवादिषु सर्वत्र एकएव, अथ अधिदैवादिनामभेदाद् भिद्यते इति. सामान्यतस्तु "अन्तस्तद्धर्मोपदेशाद्" (ब्रह्मसू.1।2।20) इति न्यायेन अत्रापि ब्रह्मत्वं सिद्धमेव. तथा शब्दभेदात् सन्दिह्यते. अधिदैवादिषड्भेदाः आधारधर्माः भगवति उपचर्यन्ते, अथवा सञ्ज्ञाविशिष्टा अन्यएव इति. तत्र तत्तदधिकृत्य यो वर्तते अभिमानेन तस्य तादृशशब्दप्रयोगः.

अधिलोकादयश्च शाखान्तरे अन्यत्रैव प्रसिद्धाः योगख्यापकाः "पञ्चसु अधिकरणेषु. अधिलोकम् अधिज्योतिषम्..." (तैत्ति.उप.1।3।1) इत्यादि. अतो 'अधिदैविका'दिशब्दाः यौगिकाः सन्तो न भगवति वर्तितुम् उत्सहन्ते नापि अन्ये कल्पनीया यद् धर्माः उपचाराद् भगवति भवेयुः. कल्प्यमानस्य सर्वानुस्यूतस्य तादृशस्य

भगवद्व्यतिरिक्तस्य असम्भवात्. तस्माद् अन्तर्यामिब्राह्मणं कुत्रापि अयुक्तं सत् तत्तदभिमानिदेवतास्तुतिपरमेव तत्तदुपासनार्थं भविष्यति.

अज्ञानञ्च असन्देहे सन्देहवद् उपपद्यते. "देहोऽसवोऽक्षाः" (भाग. पुरा.6।4।25) इतिन्यायाद् वा. नतु निषिद्धसञ्ज्ञा भगवति कल्पयितुं शक्यः इत्येवं प्राप्ते, उच्यते अन्तर्याम्यधिदैवादिषु. अन्तर्याम्यधिदैवादिषु भगवानेव, न अन्यः तादृशो भवितुम् अर्हति. ननु च उक्तं भगवति कथं निषिद्धकल्पनम् इति. तत्र आह तद्धर्मव्यपदेशात्. तेषां धर्माः तद्धर्माः. तत्प्रयुक्तिबोधकाः. ते विशेषेण भगवति उपदिश्यन्ते. सर्वेषां तत्तत्कार्यं सामर्थ्यञ्च भगवतो नतु स्वतः तेषाम् इति. एवञ्च सति अन्यत् सर्वं सङ्गतं भवति. तस्माद् ब्रह्मवाक्यमेव. अन्यथातु अधिकरणरचना, अन्तस्तद्धर्माधिकरणेन गतार्थत्वाद् अयुक्तैव॥18॥

न च स्मार्तम् अतद्धर्माभिलापात्॥19॥

ननु ब्रह्मवादे अन्तर्यामी न प्रसिद्धः, जीव-ब्रह्म-जडानामेव प्रसिद्धत्वात्. अतो अन्तर्यामिणः साङ्ख्यपरिकल्पितस्य गुणयोगात् तादृशस्य ब्रह्मत्वे वा कः पुरुषार्थो भवेत्?

नहि ईश्वरं प्रकृतिधर्मारूढम् अन्तर्यामिणं मन्यन्ते, तादृशस्य उपनिषत्स्वभावात्. पूर्वपक्षन्यायेन स्तुतिपरता. तन्मतस्य वा श्रौतत्वम् इति आशङ्क्य परिहरति. नच स्मार्तं, स्मृतिप्रसिद्धं स्मार्तं साख्यमतसिद्धम् इति यावत्. तादृशम् अन्तर्यामिरूपम् अत्र भवितुं न अर्हति. कुतः? अतद्धर्माभि-लापात्. तद्धर्माणाम् अनभिलापात्, तद्विरुद्धधर्माणां च अभिलापात्. नहि अत्र सत्त्वरजस्तमोगुणाः तत्कार्यं वा अभिलप्यते. तद्विरुद्धाश्च एते धर्माः, "यस्य पृथिवी शरीरम्" (बृहदा.उप.3।7।2) इत्यादि. तस्मात् साङ्ख्यपरिकल्पितं न अन्तर्यामिरूपम् अत्र भवितुम् अर्हति इति सिद्धम्. एवं सति ब्रह्मधर्माएव एते भवन्ति इति ब्रह्मवादः फलिष्यति॥19॥

शारीरश्चोभयेऽपि हि भेदेनैनमधीयते॥20॥

ननु उक्तन्यायेन शारीरएव भवतु. को दोषः? किमिति ब्रह्मपरत्वं कल्प्यम्? इति. तत्र आह शारीरश्च. 'न' इति अनुवर्तते. शारीरश्च जीवो न अन्तर्यामिब्राह्मणे तत्तदभिमानिरूपो "यस्य पृथिवी शरीरम्" इति वाक्यानुरोधेन भवितुम् अर्हति. ततोऽपि भिन्नतया अन्तर्यामिणो वचनात्. उभयेऽपि काण्व-माध्यन्दिन-ब्राह्मणद्वयेऽपि एनं जीवं भेदेनैव अधीयते ब्राह्मणाः. निःसन्देहार्थम् उभयग्रहणम्. "यो विज्ञाने तिष्ठन्" (बृहदा.उप.3।7।22) इति काण्वाः. "यः आत्मनि तिष्ठन्" इति माध्यन्दिनाः. नच 'आत्म'शब्देन अन्यः सम्भवति, अन्येषां पूर्वमेव पठितत्वात्. अन्ते हि जीवम् आह. तस्माद् अन्तर्यामिब्राह्मणे ब्रह्मैव वाक्यार्थः इति सिद्धम्॥20॥

इति प्रथमाध्याये द्वितीयपादे षष्ठम् अन्तर्याम्यधिकरणम्॥6॥

## अदृश्यत्वादिगुणको धर्मोक्तेः॥21॥ (1।2।7)

मुण्डके हि श्रूयते "कस्मिन्नु भगवो विज्ञाते" (मुण्ड.उप.1।1।3) इति पृष्टे "द्वे विद्ये वेदितव्ये" (तत्रैव 1।1।4) इति उत्तरम् आह. तत्र नाम-रूपात्मकजगतो विज्ञानार्थं नामांशे वेदादिः. रूपांशे परा च. तत्र वेदादिविद्यायां न सन्देहः. परायां सन्दिह्यते. किम् एषा साङ्ख्यमतविद्या ब्रह्मविद्या वा? इति. साङ्ख्यधर्माभिलापात् सन्देहः. "अथ परा यया तदक्षरम् अधिगम्यते, यत् तद् अदृश्यम् अग्राह्यम् अगोत्रम् अवर्णम् अचक्षुः अश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं, यद् भूतयोनिं परिपश्यन्ति धीराः" (तत्रैव 1।1।5,6) इत्यादि. अग्रे च "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः, अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः" (तत्रैव 2।1।2) इति उक्त्वा, "एतस्माज् जायते" इति निरूप्य "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" (तत्रैव 2।1।4) इत्यादिना रूपम् उक्त्वा पुनः पुरुषात् सृष्टिम् आह.

तत्र एकप्रकरणत्वाद् एकवाक्यता वक्तव्या. पुनः तत्र अक्षरपुरुषयोः भेदः प्रतीयते. तयोः उभयोरपि सृष्टिः. तद् ब्रह्मवादे न सङ्गच्छते. तस्मात् साङ्ख्यमतमेव एतत्. प्रकृति-पुरुषयोः श्लिष्टत्वाद् अन्यतरप्राधान्येन उभयोः स्रष्टृत्वम्, उभयात्मकत्वाद् जगतः. रूपमपि समष्टि-व्यष्टीनाम् अग्रे हि उत्पत्तिः इति. तिरोहितरूपत्वाद् न ब्रह्मविद्या किन्तु स्मृतिरेव इति. ब्रह्मविद्या वेदविद्या, उपचाराद् वा? इत्येवं प्राप्ते उच्यते. अदृश्यत्वादिगुणकः परमात्मैव, ब्रह्मविज्ञानेनैव सर्वविज्ञानात्. ततएव विद्यायापि परत्वम् अक्षरस्यापि ब्रह्मत्वं पुरुषस्यापि. तयोः परापरभावः अभेदश्च. एतादृशएव हि ब्रह्मवादः. तत्र प्रथमम् अक्षरस्य ब्रह्मत्वम् आह. अदृश्यत्वादिगुणकः परमात्मैव. कुतः? धर्मोक्तेः. "तथा अक्षरात् सम्भवति इह विश्वम्" (तत्रैव 1।1।7) इति. इयं च उपनिषत्. नहि अत्र ब्रह्मव्यतिरिक्ताद् जगदुत्पत्तिः अस्ति. पुरुषस्य ब्रह्मत्वं निःसन्दिग्धमेव. ईषद् आनन्दतिरोभावेन ब्रह्म अक्षरम् उच्यते. प्रकटानन्दः पुरुषः इति, "ब्रह्मविदाप्नोति परम्" (तैत्ति.उप.2।1) इत्यत्रैव तथानिर्णयात्. तस्माद् अदृश्यत्वादिगुणकः परमात्मैव॥21॥

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ॥22॥

ननु पूर्वपक्षन्यायेन ब्रह्मविद्याख्यायामपि स्मृतिः ब्रह्मविद्यैव अस्तु. "द्वे ब्रह्मणि वेदितव्ये मूर्तं चामूर्तं च" (मैत्रा.उप.6।22) इत्यत्र विकारस्यैव 'ब्रह्म'-पदवाच्यत्वम्. अतः प्रकृति-पुरुषावेव वाक्यार्थः इति परिहरति. इतरौ न भवतो वाक्यार्थरूपौ. कुतः? विशेषणभेद-व्यपदेशाभ्याम्. विशेषणभेदो व्यपदेशश्च ताभ्याम्. अदृश्यत्वादयो गुणाः न प्रकृतेः भवन्ति, सर्वस्यापि तद्विकारत्वात्. न हि घटदर्शनेन मृद् न दृश्यते इति वदितुं युक्तम्. ब्रह्मवादे पुनः सर्वभवनसमर्थत्वाद् ब्रह्मणि विरोधाभावः. न हि नित्यं सदैकरूपम् अविक्रियमाणञ्च भवितुम् अर्हति. सर्वब्रह्मधर्मतुल्यत्वे तदेव ब्रह्म इति जितं ब्रह्मवादिभिः. "यः सर्वज्ञः सर्वविद्" (मुण्ड.उप.1।1।9) इत्यादयस्तु सुतरामेव न प्रकृतिधर्माः. व्यवधानाच्च

न पुरुषसम्बन्धः. अक्षरनिरूपणएव पुरुषविशेषणाच्च. "येनाक्षरं पुरुषं वेद सत्यम्" (तत्रैव 2।13) इति. तस्माद् अक्षरविशेषणानि, न प्रकृतिविशेषणानि नापि पुरुषविशेषणानि साङ्ख्यपुरुषस्य. न हि दिव्यत्वादयो गुणाः पुरुषस्य भवन्ति. न हि तन्मते पुरुषभेदो हि अङ्गीक्रियते जीवब्रह्मवत्. नच तस्य बाह्याभ्यन्तरत्वं, सर्वत्वाभावात्. न हि तस्माज् जायते प्राणादिः. तस्मात् पुरुषविशेषणान्यपि न साङ्ख्यपुरषविशेषणानि. अतो विशेषणभेदः.

व्यपदेशभेदश्च ब्रह्मविद्यैव एषा इति. "स ब्रह्मविद्यां सर्वविद्याम्" (मुण्ड.उप.1।1।1) इति उपक्रमे, "प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" (तत्रैव 1।2।13) इति मध्ये, "तेषामेवैतां ब्रह्मविद्यां वदेद्" (तत्रैव 3।2।10) इत्यन्ते. तस्माद् न साङ्ख्यपरिकल्पितौ प्रकृतिपुरुषौ वाक्यार्थः. न हि ब्रह्मा ज्येष्ठपुत्राय स्मृतिरूपां विद्यां वदति इति 'च'कारार्थः॥ 22॥

रूपोपन्यासाच्च॥23॥

"अग्निर्मूर्धा चक्षुषी" (मुण्ड.उप.2।1।4) इत्यादिरूपं नहि प्रकृति-पुरुषयोः अन्यतरस्य सम्भवति. ब्रह्मवादे पुनः विश्वकायस्य एतद्रूपम्. सूत्रविभागात् पुनः मुख्योपपत्तिः एषा इति सूचितम्. 'च'कारेण श्रुत्यन्तर-विरोधः. एकवाक्यता च सर्वेषां वेदान्तानाम् इति. तस्माद् 'अक्षर'शब्देन 'पुरुष'शब्देन च ब्रह्मैव प्रोक्तम् इति ब्रह्मविद्यैव एषा इति सिद्धम्॥23॥

इति प्रथमाध्याये द्वितीयपादे सप्तमम् अदृश्यत्वाधिकरणम्॥7॥

## वैश्वानरः साधारणशब्दविशेषात्॥24॥ (1।2।8)

अधिकरणत्रयेण भोगम् उपपाद्य, पूर्वाधिकरणे अदृश्यत्वादिगुणान् उक्त्वा, प्रसङ्गाद् रूपम् उपन्यस्तम्. अधुना साकारब्रह्मताम् उपपादयितुम् इदम् अधिकरणम् आरभते. "को न आत्मा किं ब्रह्म" (छान्दो.उप.5।11।1) इति, "आत्मानमेव इमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि" (तत्रैव 5।11।6) इति च उपक्रम्य द्यु-सूर्य-वाय्वाकाश-वारि-पृथिवीनां सुतेजस्त्वादिगुणयोगम् एकैकोपासननिन्दया च मूर्धादिभावम् उपदिश्य आम्नायते. "यस्त्वेतमेवं प्रादेशमात्रम् अभिविमानम् आत्मानं वैश्वानरम् उपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेषु आत्मसु अन्नम् अत्ति. तस्य ह वा एतस्य आत्मनो वैश्वानरस्य मूर्धैव सुतेजाः चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ उदरएव वेदिः लोमानि बर्हिः हृदयं गार्हपत्यो मनोऽन्वाहार्यपचनम् आस्यम् आहवनीयः" (छान्दो.उप.5।18।2) इत्यादि.

तत्र संशयः. किं 'वैश्वानर'शब्देन ब्रह्म प्रतिपादयितुं शक्यते न वा? इति. अर्थस्य अतिसन्दिग्धत्वात् सन्देहः. तत्र उपक्रमे 'ब्रह्मात्म'पदप्रयोगो अस्ति न अन्यत् किञ्चित्.

उपपादनेतु अतद्धर्माएव. साकारस्यतु लोकन्यायेन अब्रह्मत्वम्.

वैश्वानरो यद्यपि अग्नावेव प्रसिद्धः तथापि पूर्वकाण्डसिद्धत्वाद् देवतात्मपरिग्रहो युक्तः. ततश्च "संवत्सरो वा अग्निर्वैश्वानरः" (बृ.वा.शा. सप्तान्नब्रा.) इति श्रुतेः संवत्सरस्य प्रजापतित्वाच्च हिरण्यगर्भोपासनापरम् इदम् इति गम्यते. 'ब्रह्मात्म'शब्दावपि हि तत्रैव युक्ततरौ. तदुपासकस्यैव अन्नभोजनत्वमपि सर्वत्र युक्तम्. प्रादेशमात्रत्वमपि मुख्यजीवत्वाद् अस्मदाद्यपेक्षया स्थूलत्वाभिप्रायम्. विराडभिमानित्वाच्च लोकावयवत्वम्. वेदगर्भत्वाद् अग्नित्रयात्मकत्वम् इति. तस्मात् हिरण्यगर्भोपासनापरमेव एतद्वावाक्यं न भगवदुपासनापरम् इत्येवं प्राप्ते उच्यते.

वैश्वानरः परमात्मैव. कुतः? साधारणशब्दविशेषात्. साधारण-शब्दाद् विशेषः. ये पूर्वपक्षे साधारणशब्दाः हिरण्यगर्भपरतया ततोऽपि विशेषो अस्ति येन भगवानेव वैश्वानरो भवति. प्रादेशमात्रस्यैव द्युमूर्धत्वादिधर्मः. न हि विरुद्धर्माश्रयत्वं भगवद्व्यतिरिक्ते सम्भवति, सर्वभवनसामर्थ्याभावात्. साधारणाद् धर्मात् शब्दएव विशेषः इति वा. विशेषाद् इत्येव वक्तव्ये साधारण-शब्दशब्दौ प्रादेशमात्रस्यैव 'वैश्वानर'शब्दवाच्यत्वं द्युमूर्धत्वादिकं तस्यैव इति समासेन द्योतयतः, अन्यथा विरोधाभावात्.

यदपि लोकात्मकं स्थूलं रूपं तदपि भगवतएव, न हिरण्यगर्भस्य इति. पुरुषत्वात् तस्य. विश्वस्य जडस्य नरस्य जीवस्य च भगवदंशत्वेन देवतात्वाद् "देवताद्वन्द्वे च" (पाणि.सू.7।3।21) इति विश्वानरौ. तौ निवासो यस्य इति "तस्य निवासः" (पाणि.सू.4।2।69) इति अण्, तेन परमेश्वरएव वैश्वानरो भवति, न अन्यः. भगवदंशत्वाद् अन्यत्र उपचारात् प्रयोगः. तस्माद् वैश्वानरः परमात्मा॥24॥

स्मर्यमाणम् अनुमानं स्याद् इति॥25॥

व्याख्यानेन भगवत्परत्वाद् वाक्यस्य प्रमाणान्तरम् आह "केचित् स्वदेहे हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तं, चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ति" (भाग.पुरा.2।2।8) इति. स्मर्यमाणं रूपम् अनुमानं स्यात्. प्रादेशमात्रवैश्वानरस्य ब्रह्मत्वे स्मरणं हि मननं श्रुतस्य भवति. श्रुति('श्रुति'इति पुरु.पाठे नास्ति.)वाक्येभ्यएव हि श्रवणम्. यदि प्रादेशमात्र-वैश्वानरप्रतिपादक-जातीयानां न ब्रह्मवाक्यत्वं स्यात् तदा स्मरणं न उपपद्येत. अतः इति हेतोः प्रादेशमात्रवैश्वानरो भगवानेव इति सिद्धम्॥25॥

शब्दादिभ्यो अन्तःप्रतिष्ठानान्नेति चेद् न,
तथादृष्ट्युपदेशाद् असम्भवात् पुरुषमपि चैनम् अधीयते॥26॥

किञ्चिद् आशङ्क्य परिहरति. ननु यदि स्मर्यमाणम् अनुमानं स्याद् इति वाक्यार्थो निर्णीयते, तदा स्मृत्यन्तरेण अन्यथापि व्याख्येयम्. "अहं वैश्वानरो भूत्वा प्राणिनां देहम् आश्रितः, प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" (भग.गीता 15।14) इति

जाठरएव अग्निः वैश्वानरो भवति, तस्यैव भगवद्विभूतित्वात्. वाक्यार्थो यथाकथञ्चिद् योजयिष्यते. नतु विरुद्धधर्माणां विद्यमानत्वाद् भगवत्परत्वं वाक्यस्य. विरुद्धधर्माः शब्दादयः अन्तःप्रतिष्ठानञ्च. "अग्निर्वैश्वानरः" इति शब्दः केवलवैश्वानरपदे भवेत्. भगवत्परत्वं योगेन. तद् अग्निसाहचर्याद् अग्निरेव भवेत्. तस्यैव च त्रेताग्निकल्पनम् उपासनार्थम्. "प्राणो हि देवता तद् यद् भक्तं प्रथमम् आगच्छेत् तद् होमीयम्" (छान्दो.उप. 5।10।1) इत्यादिना. तद् एतेभ्यो हेतुभ्यो अन्तःप्रतिष्ठितत्वमपि न भगवद्धर्मः. "पुरुषे अन्तःप्रतिष्ठितं वेदः" (शत.ब्राह्म.10।6।1।11) इति भिन्नहेतुः हेतुहेतुश्च भवतीति न 'च'कारः. तस्माद् विरुद्धधर्माणां विद्यमानत्वाद् न भगवान् वैश्वानरः इति चेद्, न, तथादृष्ट्युपदेशात्. सर्वभोक्तृत्वं भगवतो वक्तुं तथादृष्टिः उपदिश्यते. विरुद्धधर्माणां तत्तद्भावापत्तिः इति ऐश्वर्यमेव भगवतो वर्णितम्.

तर्हि कार्यवाक्यमेव अस्तु स्मृत्यनुरोधाद् इति चेत्, तत्र आह असम्भवात्. नहि तस्य द्युमूर्धत्वादयो धर्माः सम्भवन्ति. उपचाराद् उपासनार्थं परिकल्पनं भविष्यति इति चेद्, न. पुरुषमपि च एनम् अधीयते, वाजसनेयिनः. "स एषो अग्निर्वैश्वानरो यत् पुरुषः. स यो हैतमेव अग्निं वैश्वानरं पुरुषविधं पुरुषे अन्तःप्रतिष्ठितं वेद" (तत्रैव 10।6।11) इति. तस्मात् पुरुषत्वं, पाठान्तरे पुरुषविधत्वं वा जाठरस्य न सम्भवतीति भगवानेव वैश्वानरः. भगवत्परत्वे सम्भवति अन्यकल्पना न युक्ता इति॥26॥

अतएव न देवता भूतं च॥27॥

"वैश्वानरो न ऊत्या" (अथ.वेद 6।35।1) इत्यादिमन्त्रैः देवतायाः महाभूताग्नेः वा वाक्यार्थतेति कस्यचिद् बुद्धिः स्यात्. तदपि अतिदेशेनैव परिहरति, मुख्योपपत्तिः भगवत्परत्वे सम्भवति न अन्यकल्पना युक्ता इति॥27॥

साक्षादपि अविरोधं जैमिनिः॥28॥

अधुना परिमाणविशेषो विचार्यते. प्रादेशमात्रत्वं भगवतः स्वाभाविकं कृत्रिमं वा? इति. अस्मिन् सिद्धएव पूर्वोक्तं सिद्धं भवेद् इति विचार्यते. तत्र अस्मिन् अर्थे चत्वारः ऋषयो वेदार्थचिन्तकाः प्रकारभेदेन. तत्र केवलं शब्दबलविचारकाः आचार्याः. शब्दार्थयोः जैमिनिः. आश्मरथ्यस्तु शब्दोपसर्जनेन अर्थविचारकः. केवलार्थविचारको बादरिः इति. आचार्यः पुनः विचाराविचारयोः दोषं पश्यन् विचारमपि वदन् तेषाम् अल्पबुद्धिख्यापनाय नामानि आह.

तत्र जैमिनिः उभयबलविचारकः प्रथमं निर्दिश्यते. व्यापकस्य प्रादेशमात्रत्वे साक्षादपि कल्पनाव्यतिरेकेणापि स्वरूपविचारेणैव अविरोधं मन्यते जैमिनिः. आकाशवद् व्यापकं सर्वतःपाणिपादान्तं ब्रह्म. अतएव साकारत्वम् अनन्तमूर्तित्वं ब्रह्मणः स्वेच्छया परेच्छया स्वभावतश्च विभक्तमिव. त्रयोऽपि नियतपरिमाणाः. अनियतपरिमाणास्तु आकाशवत् परिच्छेदनिरूप्याः. तद् वृद्धि-ह्रासाभ्यां तथा भवन्ति. स्मृतावपि उक्तम्

"विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः,
प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम्,
तं तृतियं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते" इति.

भूतेषु पञ्चधा, उदरे अङ्गुष्ठमात्रः, हृदये प्रादेशो, मूर्धनि च मनसि इन्द्रियेषु च अणुः, चित्ते व्यापकः. एकस्यापि उपक्रमे सर्वेषु तथात्ववादो विभूतिः अभेदाय. तस्माद् वैश्वानरस्य पुरुषत्वात् सच्चिदानन्दरूपेणैव प्रादेशमात्रत्वं न विरुद्ध्यते. अतः साकारब्रह्मवादएव जैमिनेः सिद्धान्तः॥28॥

अभिव्यक्तेः इति आश्मरथ्यः॥29॥

निराकारमेव ब्रह्म मायाजवनिकाच्छन्नं तदपगमेन पुरुषाकारेण आधिदैविकदेवताधिष्ठितेन अभिव्यक्तः पुरुषो अन्तर्यामी. अतएव 'पुरुषविधः' इति. अभिव्यक्तेः हेतोः साकारत्वमपि मायापगमनकृतत्वाद् न स्वाभाविकत्वं तथापि निर्दिश्यमानं सच्चिदानन्दरूपमेव आश्मरथ्यो मन्यते॥29॥

अनुस्मृतेर्बादरिः॥30॥

बादरिः केवलयौक्तिकश्चिन्तनवशात् प्रादुर्भूतरूपानुवादिका श्रुतिः इति. "यद्यद् धिया त उरूगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय" (भाग.पुरा.3।9।12) इति वाक्यानुरोधात्. अन्यथा बहुकल्पनायां बुद्धि-सौकर्याभावात् तार्किकादिमतेष्वपि तथात्वाद् युक्त्यनुरोधेन ब्रह्मवादोऽपि अन्यथा नेयः इति हि मन्यते. अस्मिन् पक्षेतु अतात्त्विकत्वम्. अथवा मायास्थाने अनुस्मृतिः, अभिव्यक्तिस्तु तुल्या. एवं सति बादरिमतेऽपि तात्त्विकमेव रूपम्॥30॥

सम्पत्तेरिति जैमिनिः तथा हि दर्शयति॥31॥

जैमिनिमते साकारवादे नियतसाकारं मन्यमानः तदेकदेशी नियतमेव प्रादेशमात्रं भगवद्रूपं मन्यते. तन्निराकरणाय सर्वत्र प्रादेशत्वं सम्पत्तिकृतम् इति आह.

तत्र का सम्पत्तिः, कथम् इति स्वयमेव श्रुत्या प्रदर्शयति वाजसनेयि-ब्राह्मणे द्युप्रभृतीन् पृथिवीपर्यन्तान् वैश्वानरस्य अवयवान् अध्यात्म्ये च मूर्धप्रभृतिषु चिबुकपर्यन्तेषु सम्पादयन् "प्रादेशमात्रम् इह वै देवाः सुविदिता अभिसम्पन्नाः तथा तु व एतान् वक्ष्यामि यथा प्रादेशमात्रमेव अभिसम्पादयिष्यामि इति. स होवाच मूर्धानम् उपदिशन् एष वा अतिष्ठा वैश्वानरः" (बृहज्जाबाल शा.) इत्यादिना सम्पत्तिनिमित्तमेव प्रादेशमात्रत्वं वैश्वानरस्य आह. नतु प्रादेशमात्रएव वैश्वानरः इति तदेकदेशिपरिहारं जैमिनिः मन्यते॥31॥

आमनन्ति च एनम् अस्मिन्॥32॥

मुख्यं स्वसिद्धान्तम् आह. व्यापकएव प्रादेशः इति. न हि विरुद्धम् उभयं भगवति अनवगाह्यमाहात्म्ये. तस्मात् प्रमाणमेव अनुसर्तव्यं, न युक्तिः. शब्दबलविचारएव मुख्यः. नतु प्रातीतिकविरोधाद् अन्यथात्वकल्पनम्. वैश्वानरस्य पुरुषत्वं, पुरुषविधत्वं पुरुषे अन्तःप्रतिष्ठितत्वं च वाजसनेयिनः समामनन्ति. न हि तस्य तद्विधत्वं, तस्मिन् प्रतिष्ठितत्वं च सम्भवति युक्त्या. अतो अन्ये ऋषयो भ्रान्ताएव ये अन्यथाकल्पयन्ति इति अभिप्रेत्य स्वमतम् आह. एनं वैश्वानरम् अस्मिन् मूर्धचिबुकान्तराले जाबालाः समामनन्ति. "एषो अनन्तो अव्यक्त आत्मा यो अविमुक्ते प्रतिष्ठिते इति. सो अविमुक्तः कस्मिन् प्रतिष्ठिते" (जाबालोप.2) इत्यादिना "भ्रुवोः प्राणस्य च यः सन्धिः स एष द्यौर्लोकस्य परस्य च सन्धिः भवति" (तत्रैव 2) इति. न हि अनन्तः सङ्कुचितस्थाने भवति, विशेषणवैयर्थ्यापत्तेः. युक्तिगम्यातु अब्रह्मविद्यैव. अविरोधेऽपि वक्ष्यति "श्रुतेस्तु शब्दमूलत्वाद्" (ब्रह्मसू.2।1।27) इति. ननु तथापि काचिद् वेदानुसारिणी युक्तिः वक्तव्या, शास्त्रसाफल्याय इति चेद्, उच्यते. विरोधएव न आशङ्कनीयो वस्तुस्वभावात्. अयस्कान्तसन्निधौ लोहपरिभ्रमणे या युक्तिः गर्भस्य औदर्यादाहे, रेतसो मयुरत्वादिभावे. न हि सर्वत्र स्वभावदर्शनाभ्याम् अन्योपपत्तिः कैश्चिदपि शक्यते वक्तुम्. तस्य अन्ते "सुषिरम्" (ना.13।2) इत्यादिना श्रुतिः एवमेव आह.

यशोदास्तनन्धयस्य च भगवतो मुखारविन्दे विश्वमेव दृष्ट्वा स्वप्रमाया अविद्यानिराकरणाय सिद्धान्तम् आह. "अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः" (भाग.पुरा.10।8।40) इति. उलूखलबन्धने च अयम् अर्थो निर्णीतः. तस्माद् आनन्दांशस्यैव अयं धर्मो यत्र स्वाभिव्यक्तिः तत्र विरुद्धसर्वधर्माश्रयत्वम् इति 'च'कारार्थः. तस्मात् प्रादेशमात्रो व्यापकः इति वैश्वानरो भगवानेव इति सिद्धम्॥32॥

इति प्रथमाध्याये द्वितीयपादे अष्टमं वैश्वानराधिकरणम्॥8॥

इति श्रीवेदव्यासमतवर्ति-श्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये
प्रथमाध्यायस्य द्वितीयः पादः॥1।2॥

## प्रथमो अध्यायः

## तृतीयः पादः

### द्युभ्वाद्यायतनं स्वशब्दात् ॥1॥ (1।3।1)

द्वितीयपादे आधेयरूपो भगवान् प्रतिपादितः. आधाररूपो अत्र प्रतिपाद्यते. तेन सर्वं ब्रह्म इति फलिष्यति.

बाधकानां बलिष्ठत्वात् साधकानाम् अभावतः।
आधारधर्मा बाध्येरन् इति पादोऽभिधीयते॥18॥

इदं श्रूयते. "यस्मिन् द्यौः पृथिवी चान्तरिक्षम् ओतं मनः सह प्राणैश्च सर्वैः. तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथा अमृतस्यैषः सेतुः" (मुण्ड.उप.2।2।5) इति.

'यस्मिन्'('अस्मिन्' इति पुरु.पाठः)इत्यादिवाक्ये च वाक्यार्थः सर्वबाधितः।
अर्थात् प्रकरणाद् लिङ्गाद् इति पूर्वं विचार्यते॥19॥

अत्र संशयः. द्युभ्वाद्यायतनं ब्रह्म, आहोस्वित् पदार्थान्तरम्? इति. अर्थान्तरमेव च भवितुम् अर्हति. द्युभ्वादीनां सूत्रे मणिगणाइव प्रोतानां भारवाहकत्वाद् न तद्वाहकः परमात्मा. अन्यवाग्विमोकश्च असङ्गतः, एकविज्ञानेन सर्वविज्ञानस्य पृष्टत्वात् कथम् अन्यविमोकः? सेतुश्च गतिसाधनः, तस्माद् अफलत्वमपि. "आत्मलाभात् न परं विद्यते" (आप.ध.सू.1।8।22।2) इति विरोधश्च. अतो न ब्रह्मविद्यापरम् एतद् वाक्यं किन्तु स्मृतिमूलं भविष्यति इत्येवं प्राप्ते उच्यते.

द्युभ्वाद्यायतनं ब्रह्मैव. द्यौः भूश्च आदिः येषां ते द्युभ्वादयः. तेषाम् आयतनम्. "यस्मिन् द्यौः" (मुण्ड.उप.2।2।5) इति वाक्योक्तानां साधकं वदन् प्रथमपरिहारम् आह स्वशब्दात्. 'आत्म'शब्दो व्याख्यातः 'स्व'शब्देन. अत्र न जीवस्य आत्मत्वेन उपासनार्थम् 'आत्म'पदं किन्तु पूर्वोक्तानाम् आत्मभूतम्. तेन न भारकृतो दोषः. कारणे हि कार्यम् ओतं भवति सेतुत्वं च युज्यते. तज्जज्ञानेन अमृतत्वप्राप्तेः. अभेदेऽपि "ब्रह्मविदाप्नोति परम्" (तैत्ति.उप. 2।1) इतिवद् अर्थः. तस्माद् अबाधितार्थत्वाद् लक्ष्यस्य सर्वगतत्वव्युत्पादकत्वाद् द्युभ्वाद्यायतनं ब्रह्मैव॥1॥

मुक्तोपसृप्यव्यपदेशात्॥2॥

ननु च उक्तं सर्वविज्ञानस्य उपक्रान्तत्वाद् अन्यवाग्-विमोको विरुद्धः इति. न एषः दोषः. मुक्तोपसृप्यव्यपदेशाद् मुक्तानां जीवन्मुक्तानां शरीराद्य-ध्यासरहितानाम् अवान्तरप्रकरण'शरधनु'र्न्यायेन ब्रह्मत्वेन ज्ञातं पृथक्त्वेन वा जीवं लक्ष्ये योजयितुं तदुपसृप्यता व्यपदिश्यते. तेन शरीराद्यध्यासविशिष्टं न ब्रह्मणि योजनीयम् इति. किञ्च, वाग्विमोकएव, न वस्तुविमोकः, वस्तुनो ब्रह्मत्वात्. वाचारम्भणमात्रत्वाद् विकारस्य. अतो न सर्वविज्ञानबाधः. अतो बाधकाभावाद् इदं ब्रह्मवाक्यमेव. ये तु श्रुतेः अन्यथार्थत्वं कल्पितमतानुसारेण नयन्ति, ते पूर्वोत्तरस्पष्टश्रुतिविरुद्धार्थवादिनः ('पूर्वोक्तं स्पष्टं श्रुति..." इति पुरु.पाठः.)उपेक्ष्याः॥2॥

न अनुमानम् अतच्छब्दात्॥3॥

ननु जडधर्माः जडदृष्टान्ताः प्रकरणे बहवः सन्ति. "अरा इव" (मुण्ड. उप.2।2।6) "ब्रह्मपुरे" (तत्रैव 2।2।7) "मनोमये" (तत्रैव 2।2।6) इत्यादि. तस्मात् प्रकृतिपुरुष-निरूपक-

साङ्ख्यानुमापकमेव एतत् प्रकरणम् अस्तु. निर्णीतमपि अक्षराधिकरणे जडधर्मात् पुनः उज्जीवनम्. तस्माद् द्युभ्वाद्यायतनं प्रकृतिरेव भवितुम् अर्हति इति चेद्, न, अनुमानं तन्मतानुमापकं न भवति. कोऽपि शब्दो निःसन्दिग्धः तन्मतख्यापको नास्ति. ब्रह्मवाद-ख्यापकास्तु बहवः सन्ति 'आत्म'-'सर्वज्ञानन्दरूपा'दिशब्दाः. अतः सन्दिग्धाः जडधर्मत्वेन प्रतीयमानापि ब्रह्मधर्माएव इति युक्तम्. न हि ब्रह्मवादः श्रुतिव्यतिरिक्ते सिद्धो अस्ति येन ब्रह्मधर्माभावो निश्चेतुं शक्येत. तस्मात् सर्वाधारत्वेन निरूप्यमाणः परमात्मैव, न प्रधानम् इति॥3॥

प्राणभृच्च॥4॥

ननु अस्ति निर्णायकं प्राणानाम् ओतत्ववचनम्. "मनोमयः प्राणशरीरनेता" (मुण्ड.उप.2।2।7) इति च. अतो जीवधर्माः केचन, जडधर्माश्च अपरे सर्वज्ञत्वादयोऽपि योगप्रभावाद् जीवधर्मा इति. तस्माद् जड-जीवविशिष्टः सांख्यवादएव युक्तः इति चेद्, न. प्राणभृद् जीवो न सम्भवति, अतच्छब्दादेव. न हि आनन्दामृतरूपः सः भवितुम् अर्हति तन्मते. पृथग्योग-करणम् उत्तरार्थम्॥4॥

भेदव्यपदेशात्॥5॥

विशेषहेतुम् आह "तमेव एकं जानथ" (मुण्ड.उप.6।2।5) इति कर्मकर्तृभावः प्रतीयते. अतो भेदव्यपदेशाद् न प्राणभृद् जीवः॥5॥

प्रकरणात्॥6॥

जीव-जड-साधारण-निराकरणाय विशेषहेतुम् आह. प्रकरणं हि इदं ब्रह्मणः. "ब्रह्मा देवानाम्" इत्यारम्भे "सः ब्रह्मविद्याम्" (मुण्ड.उप.1।1। 1) इति "तेषामेव एतां ब्रह्मविद्याम्" (तत्रैव 1।1।1) इत्यन्ते च. ब्रह्मविद्यायाएव प्रकरणित्वम् अवगम्यते. "ब्रह्मैवेदम् अमृतं पुरस्ताद्" (मुण्ड. उप.2।2।11) इत्यादिभिः विस्पष्टं ब्रह्मवादः प्रतीयते॥6॥

स्थित्यदनाभ्यां च॥7॥

सर्वस्यापि अन्यथाभावशङ्कया विशेषहेतुम् आह "द्वा सुपर्णा" (मुण्ड.उप.3।1। 1) इति वाक्ये "अनश्नन् अन्यो अभिचाकशीति" (तत्रैव 3।1।1) इति केवलस्थितिः परमात्मनः, कर्मफलभोगो जीवस्य. अतः स्थित्यदनाभ्यां जीवपरमात्मानावेव मध्ये परामृष्टौ. न हि साङ्ख्यमतम् एतादृशं भवति. अतो अस्य वैशेषिकोपपत्तेः विद्यमानत्वात् प्रातिलोम्येन सर्वा उपपत्तयो दृढा इति द्युभ्वाद्यायतनं भगवानेव इति सिद्धम्. यद्यपि पैङ्ग्युपनिषदि "द्वा सुपर्णा" इति अस्य अन्यथाव्याख्यानं प्रतिभाति, तद् ऋचा प्रदेशविशेषे अन्यथा व्याख्यानं न दोषाय. तस्मात् सत्त्वक्षेत्रज्ञौ जीवब्रह्माणौ व्याख्येयौ॥7॥

इति प्रथमाध्याये तृतीयपादे प्रथमं द्युभ्वाद्यधिकरणम्॥1॥

## भूमा सम्प्रसादाद् अध्युपदेशात् ॥8॥ (1।3।2)

इदं श्रूयते : "यो वै भूमा तत् सुखम्" (छान्दो.उप.7।23।1) इति. सुखलक्षणम् उक्त्वा भूम्नो लक्षणम् आह "यत्र नान्यत् पश्यति नान्यत् शृणोति, नान्यद् विजानाति स भूमा" (तत्रैव 7।23।1) इति. तत्र संशयः. भूमा बाहुल्यम् आहोस्वित् ब्रह्म? इति. तत्र प्रपाठकारम्भे, "ततस्त ऊर्ध्वं वक्ष्यामि" (तत्रैव 7।1।1) इति प्रतिज्ञाततत्वाद् वेदादीनां नामत्वम् उक्त्वा ततो भूयस्त्वं वागादीनां प्राणपर्यन्तानाम् उक्त्वा मुख्यप्राणविद्याया अवरब्रह्मविद्यात्वख्यापनाय अर्धप्रपाठकं समाप्य ततोऽपि विज्ञानादीनाम् अन्तरङ्गाणां सुखान्तानां भूयस्त्वम् उक्त्वा सुखस्य फलत्वात् तस्यैव भूयस्त्वं वदति. यद्यपि "तरति शोकम् आत्मवित्" (तत्रैव 7।23।1) इति नारदप्रश्नाद् भूम्नो ब्रह्मत्वं प्रकरणाद् वक्तुं शक्यते तथापि तस्यैव "अथात आत्मादेशः" (तत्रैव 7।25।2) इति अहङ्कारादेशवद् आत्मादेशोऽपि अस्ति. तेन अब्रह्मत्वेऽपि प्रश्नसिद्धिः. तस्य सुखबाहुल्यस्य स्वे महिम्नि प्रतिष्ठितत्वं सर्वतः पूर्णविषयलाभेऽपि भवति, सुषुप्तावपि इति तयोः अन्यतरद् ग्राह्यम्. तत्रापि अन्तरङ्गत्वात् सुषुप्तिरेव अत्र भूमत्वेन उच्यते, न सुखबाहुल्यम्. सुषुप्तिरूपमेव भूमा इत्येवं प्राप्ते उच्यते.

भूमा भगवानेव. कुतः? सम्प्रसादाद् अध्युपदेशात्. सम्प्रसादः सुषुप्तिः. तस्माद् अधि आधिक्येन उपदेशात्. यद्यपि "न अन्यत् पश्यति" (तत्रैव 7।24।1) इत्यादि समानं तथापि "स एव अधस्ताद्" (तत्रैव 7।25।1) इत्यादिनातु ततोपि अधिकधर्माः उच्यन्ते. न हि सुषुप्तेः सर्वत्वादिधर्माः सम्भवन्ति. 'आत्म'शब्दश्च मुख्यतया परिगृहीतो भवति. 'भाव'शब्दस्यापि सर्वत्वाद् भगवति वृत्तिः अदोषः. तस्माद् भूमा भगवानेव॥8॥

धर्मोपपत्तेश्च॥9॥

"नान्यत् पश्यति" (छान्दो.उप.7।24।1) इत्यादयोऽपि धर्माः ब्रह्मणि न विरुद्ध्यन्ते, "स्वाप्ययसम्पत्त्योः अन्यतरापेक्षम् आविष्कृतं हि" (ब्रह्मसू.4।4।16) इति न्यायेन. "यत्र हि द्वैतमिव भवति" (बृहदा.उप. 4।5। 15) इत्यादिश्रुत्या उभयत्र आम्नानाद्. अन्यादर्शनादयो भगवति न विरुद्ध्यन्ते. 'च'कारात् फलं तस्यैव उपपद्यते इति आह. "स वा एष एवं पश्यन्" (छान्दो.उप.7।25।2) इत्यादिना "सहस्राणि च विंशतिः" (तत्रैव 7।26।2) इत्यन्तेन. तेन भूमा ब्रह्मैव इति सिद्धम्॥9॥

इति प्रथमाध्याये तृतियपादे द्वितीयं भूमाधिकरणम्॥2॥

## अक्षरम् अम्बरान्तधृतेः॥10॥ (1।3।3)

गार्गीब्राह्मणे “कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च” इति. “स होवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलम् अनणु” (बृहदा.उप. 3।8।7,8) इत्यादि श्रूयते. तत्र संशयः : किम् ‘अक्षर’शब्देन पदार्थान्तरं, ब्रह्म वा? इति. तत्र अचेतनसाधारण्याद् बाणतुल्यत्वाद् आकाशवद् अस्यापि अब्रह्मत्वमेव. द्युभ्वाद्यायतनविरोधस्तु तुल्यः. अतएव अगतार्थता अदृश्यत्वाद्यधिकरणेन. न हि तत्र विरुद्धधर्माः आशङ्क्य निराक्रियन्ते. अतो अचेतनतुल्यत्वाद् ब्रह्मवादस्य असमाप्तत्वाद् आग्रहाविष्टत्वात् प्रष्टुः स्त्रीत्वाच्च “स्मरो वा व आकाशाद् भूयान्” (छान्दो.उप.7।13।1) इतिवत् कयाचिद् उपपत्त्या स्मरणकालभूत-सूक्ष्मप्रकृतिजीवविशेषाणाम् अन्यतरपरिग्रहः इति वक्तव्यम् उपासनार्थम्. अत्र हि प्रापञ्चिकसर्वधर्मराहित्यं ब्रह्मधर्मत्वं च प्रतीयते. तदुपासनार्थत्वोपपद्येत. ब्रह्मपरिग्रहेतु वैयर्थ्यमेव, उपदेष्टृत्वाभावात्. तस्माद् अक्षरम् अन्यदेव ब्रह्मधर्मत्वेन उपास्यम् इत्येवं प्राप्ते. उच्यते.

अक्षरं परमात्मैव. कुतः? अम्बरान्तधृतेः. श्रुतिं व्याख्याय सिद्धं हेतुम् आह. अत्र एकएव प्रश्नः उत्तरं च एकम्. आकाशस्य अवान्तरत्वमेव. तेन अम्बरान्तानां पृथिव्यादीनां विधारकः परमात्मैव. द्युभ्वाद्यायतनसिद्धो धर्मो अत्र हेतुः “न तदश्नोति कश्चन” (बृहदा.उप.3।8।8) इति मुख्यतया परिगृहीतो भवति. अन्यथा मूर्ध्नो विपतनं च भवेत्. न हि अन्यः सर्वाधारो भवितुम् अर्हति. परोक्षेण ब्रह्मकथनार्थम् ‘अक्षर’पदं अन्यनिराकरणार्थं तद्धर्मोपदेशश्च. तस्माद् अक्षरं परमात्मैव॥10॥

सा च प्रशासनात्॥11॥

ननु क्वचिद् वाक्ये विधारणं ब्रह्मधर्मत्वेन आश्रितमिति अन्यत्रापि न तथा आश्रयितुं शक्यते, नियामकाभावाद्, इत्यतः आह. सा च विधृतिः अत्रापि वाक्ये ब्रह्मधर्मएव. कुतः? प्रशासनात्. “एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठतः” (बृहदा.उप.3।8।9) इति प्रशासनेन विधारणम् अन्यधर्मो भवितुं न अर्हति, अप्रतिहताज्ञाशक्तेः भगवद्धर्मत्वात्. तस्माद् अक्षरं ब्रह्मैव॥11॥

अन्यभावव्यावृत्तेश्च॥12॥

ननु उक्तम् उपासनापरं भविष्यति इति. तत्र आह अन्यभावव्यावृत्तेः. अन्यस्य भावो अन्यभावः. अब्रह्मधर्मः इति यावत्. तस्य अत्र व्यावृत्तेः. अब्रह्मत्वे हि ब्रह्मत्वेन उपासना भवति, कार्यकारणभावभेदेन. न हि अत्र तादृशो धर्मो अस्ति. ‘च’काराद् “यो वा एतद् अक्षरम् अविदित्वा गार्गि” (बृहदा.उप. 3।8।10) इत्यादिना शुद्धब्रह्मप्रतिपादनमेव, न उपासनाप्रतिपादनम् इति. तस्माद् अक्षरं ब्रह्मैव इति सिद्धम्॥12॥
इति प्रथमाध्याये तृतियपादे तृतीयम् अक्षराधिकरणम्॥3॥

## ईक्षतिकर्मव्यपदेशात् सः॥13॥ (1।3।4)

पञ्चमप्रश्ने, "एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यद् ॐकारः तस्माद् विद्वानेते नैकतरमन्वेति यद्येकमात्र" (प्रश्नोप.5।2) इत्यादिना एकद्वित्रि-मात्रोपासनया ऋग्-यजुः-सामभिः मनुष्यलोक-सोमलोक-सूर्यलोक-प्राप्ति-पुनरागमने निरूप्य "अर्धचतुर्थमात्रोपासनया परं पुरुषम् अभिध्यायीत. सः तेजसि परे सम्पन्नो यथा पादोदरस्त्वच" (तत्रैव 5।5) इत्यादिना "परात् परं पुरिशयं पुरुषमीक्षते" (तत्रैव 5।5) इति. तत्र संशयः. परपुरुषः परमात्मा ध्यानविषयः आहोस्विद् विराट्पुरुषो ब्रह्मा वा? इति. तत्र अमुख्यप्रवाह-पतितत्वाद् ब्रह्मलोकं गतस्य तदीक्षणमेव च फलं श्रूयते. न हि परमपुरुषस्य ब्रह्मत्वे तज्ज्ञानमेव फलं भवति. तस्माद् विराट् ब्रह्मा वा अभिध्यानविषयः इत्येवं प्राप्ते, उच्यते.

स अभिध्यानविषयः परपुरुषः परमात्मैव. कुतः? ईक्षतिकर्म-व्यपदेशात्. जीवघनात् केवलजीवाधारभूताद् ब्रह्मलोकात् पररूपपुरुषदर्शनम् ईक्षतिः. तस्याः कर्मत्वेन व्यपदेशात्. उभयोः कर्मणोः एकत्वम् अपरं त्रिमात्रपर्यन्तं निरूप्य परं हि अग्रे निरूपयति. तथैव च श्लोके "तिस्रो मात्रा" इत्यादि.

अभिध्यानस्य हि साक्षात्कारः फलम्. अतः फलरूपज्ञानस्य विषयत्वात् परपुरुषः परमात्मैव. मन्दशङ्कानिवृत्त्यर्थमेव इदं सूत्रम्. अत्र सर्वसङ्करवादिनाम् अन्यथापाठो भ्रमात्. तत्रापि विचारः तुल्यः॥13॥
इति प्रथमाध्याये तृतियपादे चतुर्थम् ईक्षतिकर्माधिकरणम्॥4॥

## दहर उत्तरेभ्यः॥14॥ (1।3।5)

"अथ यदिदम् अस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोस्मिन् अन्तराकाशः तस्मिन् यदन्तः तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" (छान्दो. उप.8।1।1) इत्यादि श्रूयते. तत्र संशयः : किं जीवो अन्वेष्टव्यो ब्रह्म वा? इति जीवब्रह्मवादो निर्णीयते. श्रुत्यर्थो अत्र हि निर्णेतव्यः. तद् यद् अस्मिन् वाक्ये परमार्थतो जीवएव ब्रह्म चेत् शास्त्रं च तत्रैव समाप्तं चेद् व्यर्थम् अधिकरणारम्भः. इदमेव च वाक्यं श्रुत्या वक्तव्यं च भवेत्. तस्माद् अस्मिन् अधिकरणे मुख्या सर्वसङ्करवादादिनिराकृतिः. किं तावत् प्राप्तम्? दहर आकाशो जीवः इति. अत्र अवान्तरप्रकरणद्वयम्. तत्र द्वितीये प्रजापतिप्रकरणे जीवएव अमृताभयरूपः प्रतिभाति. स्पष्टार्थं च द्वितीयप्रकरणम्. तस्मात् प्रथमेऽपि जीवएव तादृशधर्मवान् भवितुम् अर्हति. अर्थानुगुण्यमपि व्याख्येयम्. अयमेव जीवो ब्रह्म, "अयमात्मा ब्रह्म" (बृहदा.उप.4।4।5) इति श्रुतेः. मैत्रेयीब्राह्मणं च अनुगुणं भविष्यति. तस्य पुरं शरीरम्. तत्र हृदयकमलं सूक्ष्मम्. तत्र आराग्रमात्रो जीवएव आकाशः. तात्स्थ्यात् तद्व्यपदेशः इति. अन्वेष्टव्यस्तु तस्मिन् विद्यमानः तन्महिमा. वासनारूपेण सर्वं तत्र वर्तते इति. अन्यथा उभयत्र सर्वकथनं

विरुद्धम् आपद्येत. भूतानि महाभूतानि पुत्रादयो वा. “तं चेद् ब्रूयुः” (छान्दो.उप. 8।1।4) इत्यादिना नित्यताम् उपपाद्य “एष आत्मा” (तत्रैव 8।1।5) इत्यादिना तस्यैव ब्रह्मत्वम् उपदिशति, तज्ज्ञानं च प्रशंसति. स्वात्मज्ञानिनः कामसिद्धिं च आह “य इह” (तत्रैव 8।1।6) इत्यादिना. येऽपि च विरुद्धाः धर्माः प्रतिभान्ति, अहरहर्गमनादयः, तेऽपि स्वकल्पितजीवानां स्वप्नमाया-मनोरथादिषु तेषामेव गमनागमने प्रति, स्वातिरिक्तस्य प्रतिस्वातिरिक्तस्य ब्रह्मणो अभावात्. एवं लोकाधारत्वमपि. ब्रह्मचर्यं च तस्य साधनम् इति. योगश्च “तयोर्ध्वमायन्नमृतत्वम् एति” (कठोप.2।3।16) इति च. तस्माज् जीवएव दहरः इत्येवं प्राप्ते, उच्यते. दहरः परमात्मा, न जीवः. कुतः? उत्तरेभ्यः. उत्तरत्र वक्ष्यमाणेभ्यो हेतुभ्यः. तेषामपि साध्यत्वाद् एवम् उक्तम्. जीवो नाम भगवदंशो, न भगवानेव इति अग्रे वक्ष्यते. “अंशो नानाव्यपदेशाद्” (ब्रह्मसू. 2।3।43) इति. नापि ब्रह्म तावन्मात्रम्. इदमपि अग्रे वक्ष्यते “अधिकन्तु भेदनिर्देशाद्” (ब्रह्मसू.2।1।22) इति. तस्माद् इदं प्रकरणं न जीवब्रह्मविद्यापरं किन्तु ब्रह्मवाक्यमेव इति॥14॥

गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च॥15॥

उत्तरहेतूनां मध्ये हेतुद्वयम् आह गतिशब्दाभ्याम्. गतिः ब्रह्मलोक-गमनम्. “एवमेव इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति”(छान्दो.उप.8।3।2) इति. “एष आत्मापहतपाप्मा सत्यकामः सत्यसङ्कल्पः” (छान्दो.उप.8।1।5) इति केवलभगवद्वाचकाः शब्दाः ‘ब्रह्मलोक’शब्दश्च. ननु उक्तं जीवस्यैव एते शब्दाः गतिश्च मनोरथादिकल्पितानाम् इति. तन्निराकरणाय आह तथाहि. तथैव गति-शब्दौ भगवत्येव युक्तौ. ‘अनृतेनापिधानं’ हि तेषां विशेषणम्. अज्ञानावेष्टितत्वम् इति अर्थः, नतु अज्ञानपरिकल्पितत्वं, दृष्टत्वात्. तथैव हि दृश्यते. सर्वोऽपि आह “न किञ्चिद् अवेदिषम्” इति. नच गन्तुः अभावएव, शास्त्रवैफल्यापत्तेः. नहि आत्मनाशः पुरुषार्थः. कर्मकर्तृविरोधश्च तथा. अपहतपाप्मत्वं च, तद्विरुद्धधर्माणाम् अनुभवात्. भगवतितु इदानीमेव तेषाम् अनुभवः, ध्यानादौ उपलब्धेः. पृथिवीशरावववदेव जीवब्रह्मविभागो नतु अज्ञानकृतः. तथाहि अज्ञानं नाम चैतन्यान्तर्भूतं तच्छक्तिरूपम् अनादिः उत बहिर्भूतम् सांख्यवत्? न बहिर्भूतं चेत् सांख्यनिराकरणेनैव निराकृतम्. अन्तःस्थितायाः शक्तिरूपायाः स्वरूपाविरोधिन्या न स्वरूपविभेदकत्वम्, आश्रयनाशप्रसङ्गात्, कल्पनायाश्च अप्रामाणिकत्वात्. बहिःस्थितस्यैव हि भेदकत्वम्. कुठारादिवत्. नापि वायुवत्, तच्छक्तित्वात्. किञ्च, को अयं ब्रह्मवादे प्रद्वेषो येन मिथ्यावादः परिकल्प्यते? अज्ञानाद् इति चेत्, पीतशंखप्रतिभानवद् युक्तं मतकरणं ब्रह्मविदुपासनयातु गमिष्यति. शर्कराभक्षणेनेव पीतप्रतीतिः.

सर्वज्ञेन हि वेदव्यासेन भाविमिथ्यावादनिराकरणेन इदम् अधिकरणम् आरब्धम्. तस्माद् जीवानामेव अज्ञानदर्शनाद् ब्रह्मणः सर्वज्ञत्वदर्शनाद् गति-शब्दौ ब्रह्मविषयावेव न

जीवविषयौ. किञ्च, लिङ्गं च वर्तते. “यथैवेह कर्मजितो लोकः क्षीयते एवमेव अमुत्र पुण्यजितो लोकः क्षीयते” (छान्दो.उप.8।1।6) इति. न हि स्वाज्ञानं स्वस्य सम्भवति, हिताकरणप्रसक्तिश्च. नच ज्ञानेन सामर्थ्यम् उद्बुद्धम् इति वाच्यम्, विरोधित्वात्. नहि ज्ञाने जाते कर्तृत्वम् अस्ति इति विप्लववादिनो अङ्गीकुर्वन्ति. विरुद्धा च कल्पना “अहं ब्रह्मास्मि” इति. अतएव सर्वभावश्रुतेः तज्ज्ञानं च तस्य सार्वज्ञे लिङ्गम्. तस्य हि सः गुणो ‘भग’शब्दवाच्यानाम् अन्यतरः. सः चेद् जीवे समायाति तत्कृपया तस्येव अस्यापि माहात्म्यं भवति. तस्मात् लिङ्गादपि गति-शब्दौ ब्रह्मविषयौ. ‘च’करात् “तमेव विदित्व अतिमृत्युमेति नान्यः पन्था विद्यते अयनाय” (श्वेता.उप.3।8) इति श्रुत्या ब्रह्मत्वेन ज्ञानं न आत्मनो मोक्षाय ब्रह्मणएवतु ज्ञानम् आत्मत्वेनापि. तस्माद् दहरः परमात्मा॥15॥

धृतेश्च महिम्नोस्यास्मिन् उपलब्धेः॥16॥

अपरं हेतुम् आह धृतेः. “अथ यः आत्मा सः सेतुर्विधृतिरेषां लोकानाम् असम्भेदाय” (छान्दो.उप.8।4।1) इति. न हि सर्वलोकविधारकत्वं ब्रह्मणो अन्यस्य सम्भवति. ‘च’कारात् सेतुत्वमपि. “तद् अन्वेष्टव्यं तद् विजिज्ञासितव्यम्” (तत्रैव 8।1।1) इति लोकविधारणस्य माहात्म्यरूपत्वात्. तस्यैव कर्मत्वम् इति आह महिम्नः इति. महिमा एषः पुरुषस्य, नतु वासनारूपेण तस्मिन् विद्यमानत्वम्. संसारिधर्मत्वेन अमाहात्म्यरूपत्वात्. नच विरुद्धम् उभयत्र एकस्य दर्शनम् इति वाच्यम्. अस्य अस्मिन् उपलब्धेः. अस्य एतादृश-विरुद्धधर्माश्रयमाहात्म्यस्य अस्मिन् भगवत्येव उपलब्धेः. “ज्यायान् आकाशाद्यावान् वा अयमाकाशः अणुः स्थुलः” (तत्रैव 8।1।3) इति. यशोदादयश्च बहिःस्थितमपि जगद् अन्तः प्रपश्यन्ति. नतु एतादृशो जीवो भवितुम् अर्हति. तस्माद् ब्रह्मैव दहरः॥16॥

प्रसिद्धेश्च॥17॥

‘आकाश’शब्दवाच्यत्वप्रसिद्धिः, अपहतपाप्मत्वादिप्रसिद्धिः, किं बहुना प्रकरणोक्तसर्वधर्मप्रसिद्धिः भगवत्येव, न जीवे सम्भवति अतोऽपि भगवानेव दहरः. ‘च’काराद् विधिमुखेन अधिकरणसमाप्तिः सूचिता॥17॥

अन्यनिषेधमुखेन पुनः विचारयति

इतरपरामर्शात् स इति चेन्नासम्भवात्॥18॥

ननु ब्रह्म एतादृशं, जीवो न एतादृशः, इति न क्वचित् सिद्धम् अस्ति, श्रुत्येकसमधिगम्यत्वाद् उभयस्वरूपस्य ब्रह्मवादे. अतो यथा सर्वत्र ब्रह्मणो असाधारणधर्मदर्शनात् तत्तत्प्रकरणं ब्रह्मणः इति निश्चीयते एवम् इहापि जीवस्य असाधारणधर्मदर्शनाद् जीवप्रकरणम् इति कुतो न निश्चीयते? निश्चितेतु तस्मिन् आकाशतुल्यत्वादयो धर्मा जीवस्यैव भविष्यन्ति न अन्यस्य इति अभिप्रायेण आह

इतरपरामर्शात् सः. इतरो जीवः तस्य परामर्शः. उपक्रमोपसंहारमध्यपरामर्शैः सन्दिग्धे निर्णयः. तत्र आत्मविदः सर्वान् कामान् (छान्दो.उप.8।1।6) उक्त्वा मध्ये, "अथ य एषः सम्प्रसादो अस्माच् छरीरात् समुत्थाय परं ज्योतिरूपसम्पद्य स्वेन रूपेण अभिनिष्पद्यते एषः आत्मेति होवाच एतदमृतम् अभयम्" (छान्दो. उप.8।3।4) इत्यादि मध्ये. अग्रे "अथ य आत्मा सः सेतुः" (तत्रैव 8।4।1) इति.

तत्र सम्प्रसादः सुषुप्तिः जीवावस्था. तत्र परसम्बन्धनिमित्तेन स्वेनैव रूपेण अभिनिष्पत्तिवचनाद् जीवएव एतादृशः इति गम्यते. नहि अत्र परमात्मनो अयं धर्मः सम्भवति. अतः सर्वमेव प्रकरणं जीवपरं भविष्यतीति सएव जीवएव प्रकरणार्थः इति चेद्, न. जीवः तादृशो न भवति, विरुद्धधर्मत्वेनेव सर्वत्र तन्निश्चयात्. उभयोः एकरूपत्वे हि उभयत्वमेव न स्यात्. "ऋतं पिबन्तौ" (कठोप.3।1) इत्यादिवाक्यविरोधश्च. अतो न जीवः तादृशः इति अभिप्रायेण आह असम्भवात्. नहि जीवे जगदाधारत्वादिकं सम्भवति. नहि परामर्शमात्रेण सर्ववेदान्तविरुद्धं कल्पयितुं शक्यते. परामर्शस्य अन्यार्थत्वम् उत्तरत्र वक्ष्यति. तस्माद् दहरो जीवो न भवितुम् अर्हति. वाक्यार्थो यथा उपपद्यते तथा उत्तरत्र वक्ष्यते. ब्रह्मतु एकमेव न उभयम् इति निश्चयः॥18॥

उत्तरात् चेद् आविर्भूतस्वरूपस्तु॥19॥

उतरात् प्रकरणात् प्राजापत्यात्. तत्रहि दिव्ये चक्षुषि मनोरूपे प्रतीयमानो जीवएव अमृताभयरूपो निरूपितः. तस्यैव उदशरावे जाग्रत्साक्षित्वं, तदनु स्वप्नसाक्षित्वं, तदनु सुषुप्तिसाक्षित्वं निरूप्य सर्वत्र तस्य अमृतरूपत्वमेव निरूप्य अवस्थानाम् अतात्त्विकत्वम् उक्त्वा समाध्यवस्थायां मनसि तमेव जीवं प्रतिपादयति. अतो जीवोऽपि वस्तुतः तादृशएव इति प्रकृतेऽपि परामर्शात् सएव इति चेत्. एवम् आशङ्क्य परिहरति 'तु'शब्देन. न अयम् अर्थो दूष्यते किन्तु किञ्चिद् अन्यद् अस्ति इति न 'न'कारप्रयोगः. तद् आह आविर्भूतस्वरूपः. स्वाप्ययसम्पत्त्योः भगवदाविर्भावो जीवे भवति नृसिंहोपासकस्य नृसिंहाविर्भाववत्. ब्रह्मणः उपदेशसमये भगवदाविर्भावात्. सर्वत्र स्वात्मानं पश्यन् इन्द्रेऽपि तथैव उपदिष्टवान् प्रजापतिः. अन्यथा प्रतिबिम्बादौ अमृताभयवचनं मिथ्या स्यात्. इन्द्रेतु आविर्भावाभावात् प्रजापत्यसन्निधाने विपरीतं पश्यति. अतः तावन्मात्रदोषपरिहाराय अन्यथा उपदेशः. स्वप्नादिषु तथा प्रकृतेऽपि. सुषुप्तावस्थायां भगवदाविर्भावात् तथावचनम्. तस्माद् उभयमपि भगवत्प्रकरणमेव. एवम् अन्यत्रापि भगवदावेशकृता भगवद्धर्माभिलापा ('...भिलापाद् ग्राह्याः' इति पुरु.पाठः) ऊह्याः. तस्माद् दहरः परमात्मैव॥19॥

अन्यार्थश्च परामर्शः॥20॥

परामर्शस्य प्रयोजनम् आह. अन्यएव अर्थः प्रयोजनं यस्य. "तस्माद् यम् अहरहर्वा एवं वित् स्वर्गं लोकम् एति" (छान्दो.उप.8।3।5). स्वस्य एवं ज्ञाने हि ब्रह्मसुखं

फलं ब्रह्मज्ञानापेक्षायाम् उपयुज्येत. भगवतश्च तदा आविर्भावो भवति इति ‘च’कारार्थः. सम्पतौ भगवदावेशकथनार्थं वक्ष्यति च “स्वाप्यय-सम्पत्त्योः अन्यतरापेक्षम आविष्कृतं हि” (ब्रह्मसू.4।4।16) इति चतुर्थे. तस्माद् न परामर्शेन अन्यथा वल्गनम् (‘कल्पनम्’ इति पुरु.पाठः)॥20॥

अल्पश्रुतेरिति चेत् तदुक्तम्॥21॥

नतु न वयं जीवे उपपत्तिः अस्ति इति जीवप्रकरणं कल्पयामः किन्तु ब्रह्मणि न अयम् अर्थः उपपद्यते. अल्पश्रुतेः. अल्पे हि पुण्डरीके कथं भगवदवस्थानम्? व्यापकत्वश्रवणात्. “यावान् वा अयम् आकाशः” (छान्दो. उप.8।1।3) इति. तस्माद् विरोधपरिहाराय जीवएव आराग्रमात्रः तथा भवतु इति कल्प्यते इति चेत् तर्हि भवान् सम्यग् विचारको अस्मदीयएव. परं तत्समाधानं पूर्वमेव उक्तं “निचाय्यत्वाद् एवं व्योमवच्च” (ब्रह्मसू.1।2।7) इत्यत्र तद् न प्रस्मर्तव्यम्. विरोधस्तु सर्वभवनसमर्थे ब्रह्मणि न आशङ्कनीयः. तथा पुरुषशरीरं च. “पुरुषत्वे च मां धीराः सांख्य-योगविशारदाः, आविस्तरां प्रपश्यन्ति सर्वशक्त्युपबृंहितम्” (भाग.पुरा.11।7।21) इति भगवद्वाक्यात्. तस्माद् भगवानेव दहरः इति सिद्धम्॥21॥

इति प्रथमाध्याये तृतीयपादे पञ्चमं दहराधिकरणम्॥5॥

## अनुकृतेस्तस्य च॥22॥ (1।3।6)

दहरविरुद्धं वाक्यम् आशङ्क्य परिहरति. “न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतो अयम् अग्निः तमेव भान्तम् अनुभाति सर्वं तस्य भासा सर्वम् इदं विभाति” (कठो.उप.2।5।15) इति कठवल्याम् अन्यत्र च श्रूयते. ‘यत्-तच्’छब्दानाम् एकार्थत्वं प्रकरणाद् ब्रह्मपरत्वं च अवगतम्. अर्थाच्च सन्देहः. “यस्मिन् द्यौः” (मुण्ड.उप.2।2।5) इत्यत्र सूर्यादीनां ब्रह्माधारत्वम् उक्तम्. अस्मिन् च वाक्ये पूर्वार्धे तत्र तेषां भानं निषिद्ध्यते.

यत्र यत् सर्वदा तिष्ठेत् तत्र चेत् तन्न भासते ।
क्व भासेताप्यपेक्षायां कर्मत्वे श्रुतिबाधनम्॥20॥

यत्र इति अधिकरणसप्तमी. यत्र लोकान्तरस्थितानामपि अभानं, तत्र अग्नेः का वार्ता इति वचनात् सत्यलोकस्थितः कश्चित् तेजोविशेषएव वाक्यार्थः इत्येवं प्राप्ते, उच्यते अनुकृतेः तस्य. भगवदनुकारार्थमेव एतद् वचनम्. स्वतो भाननिषेधः पूर्वार्धे. सर्वोऽपि पदार्थः तमेव अनुकरोति, सूर्यं रश्मयइव, छाया पुरुषमिव. तस्माद् वाक्ये भगवदनुकारित्ववचनाद् न नानार्थकल्पनम्. किञ्च “तस्य भासा सर्वम् इदं विभाति” (मुण्ड.उप.2।2।10) इति

सूर्यादीनां स्वतः प्रकाशो नास्त्येव, घटवत्. भगवत्प्रकाशेनैव प्रकाशवत्त्वम् इति 'च'कारार्थः. तस्मात् स्वतो अभाने लक्षणया कर्मत्वे वा भगवत्परत्वे सिद्धे न अन्यार्थ-कल्पनम्॥22॥

अपि स्मर्यते॥23॥

व्याख्याते अर्थे सम्मत्यर्थम् आह. 'अपि' इति समुच्चयः.

"न तद्भासयते सूर्यो न शशाङ्को न पावकः" (भग.गीता 15।6)

"यदादित्यगतं तेजो जगद्भासयतेऽखिलम्,
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" (तत्रैव 15।12)

इति च. तस्माद् भगवानेव सर्वावभासकः. तमेव सर्वम् अनुकरोति इति सिद्धम्॥23॥

इति प्रथमाध्यास्य तृतीयपादे षष्ठम् अनुकृत्यधिकरणम्॥6॥

## शब्दादेव प्रमितः॥24॥ (1।3।7)

प्रसङ्गात् पुनर्बाधकान्तरम् आशङ्क्य परिहरति.

"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति,
ईशानो भूतभव्यस्य न ततो विजुगुप्सति" (का.2।4।13) तथा

"अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः" (का.2।4॥13) इति.

तत्रैव श्रूयते "यावान् वा अयम् आकाशः" (छान्दो.उप.8।1।3) इति व्यापकत्वम् अन्तःस्थितस्य प्रतीतम्. अङ्गुष्ठमात्रता च अत्र प्रतीयते. अतो विरोधाद् जीवस्यैव लोकान्तरगन्तृदेहवतः उपासनार्थम् ईशानत्वादिधर्माः.

"अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलाद्" (महाभा.3।297।17) इति तन्निवृत्यर्थम्. तस्माद् अङ्गुष्ठमात्रो न भगवान् एवं प्राप्तम्. अतः उतरम् आह शब्दादेव प्रमितः. अत्र सन्देहएव न कर्तव्यः, शब्दादेव प्रकर्षेण विमानात्. यथा दहरवाक्ये सूक्ष्मस्यैव व्यापकत्वं तथा अङ्गुष्ठमात्रस्यैव ईशानत्वम्. यदि भगवान् तादृशो न स्याद् अन्यस्य तादृशत्वं न उपपद्येत. तस्माद् भगवतः सर्वतःपाणिपादान्तत्वाद् यत्र यावान् अपेक्ष्यते तत्र तावन्तं श्रुतिः निरूपयतीति अङ्गुष्ठमात्रः परमात्मा इति सिद्धम्॥24॥

हृद्यपेक्षया तु मनुष्याधिकारत्वात्॥25॥

ननु अनेकरूपत्वं विरुद्धधर्मवत्त्वं माहात्म्यार्थं स्वरूपे निरूपयति. प्रादेशमात्रत्वं च ध्यानार्थम्. अङ्गुष्ठमात्रत्वस्य कोपयोगः? इति चेत्, तत्र आह 'तु'शब्देन निःप्रयोजनत्वं निराक्रियते. अस्ति प्रयोजनम्. तद् आह. हृदि अङ्गुष्ठमात्रं निरूप्यते. केन हेतुना? अपेक्षया ईश्वरकार्यापेक्षया. "ईश्वरः सर्वभूतानां हृद्देशे अर्जुन! तिष्ठति" (भग.गीता 18।61) इति

स्मृतेः. रक्षार्थम् अङ्गुष्ठमात्र इति अर्थः. ननु प्रमाणान्तरत्वे किम् एतद् न सम्भवति? तत्र आह मनुष्याधिकारत्वात्. मनुष्यानधिकृत्य इदं मृत्यूपाख्यानं प्रवृत्तम्. अतो मनुष्याणां हृदयस्य अङ्गुष्ठमात्रत्वात्. यद्यपि हृदयं स्थूलं, तथापि धर्मरूपं तावदेव, तावन्मात्रस्यैव अवदानश्रवणात्. तस्माद् अङ्गुष्ठमात्रस्यैव सर्वधर्म-रक्षकत्वाद् अङ्गुष्ठमात्रो अत्र भगवानेव इति सिद्धम्॥25॥

प्रथमाध्याये तृतीयपादे सप्तमं शब्दादेव इति अधिकरणम्॥7॥

## तदुपर्यपि च बादरायणः सम्भवात्॥26॥ (1।3।8)

अङ्गुष्ठमात्रनिरूपणार्थं मनुष्याधिकारे निरूपिते कस्यचिद् भ्रमो भवेत् सर्वत्र ब्रह्मविद्यायां मनुष्याणामेव अधिकारः इति. तन्निराकरणार्थं देवादीनाम् अधिकारम् आह. तदुपर्यपि मनुष्यापेक्षया अर्वाक्तनानाम् अधिकारो नास्ति. तत्रापि वैदिकधर्महेतोः त्रैवर्णिकानां धर्मयुक्तानाम् आगतम्. ततोऽपि ये साध्यादयो धर्मयुक्ताः तेषामपि अधिकारः. तत्र जैमिनिप्रभृतीनां न सम्मतिः इति स्वनामग्रहणम्. विशिष्टत्रैवर्णिकान् आरभ्य प्रजापतिः पर्यन्तं शतानन्दिनाम् अधिकारं मन्यते बादरायणः. कुतः? सम्भवात्. सम्भवति तेषां ज्ञानाधिकारः. धर्मज्ञानाभ्यां सातिशयाभ्यां हि तादृशजन्मसम्भवात्. न हि तेषां पूर्वसंस्कारो लुप्यते. अक्षरपर्यन्तं शतोत्कर्षश्रवणाद् उपर्यपेक्षा. अतो अक्षरप्राप्तेः शुद्धब्रह्मविद्याहेतुकत्वाद् उत्तरोत्तरम् उपदेष्टॄणां विद्यमानत्वात् प्रजापतिः पर्यन्तं सर्वेषाम् अधिकारः सम्भवति. सम्भववचनाद् दुर्लभाधिकारः तत्र इति सूचितम्. "यो यो देवानां प्रत्यबुध्यत सएव तदभवत् तथर्षीणां तथा मनुष्याणाम्" (बृहदा. उप.1।4।10) इति. तदुपर्यपि अधिकारः सिद्धः॥26॥

विरोधः कर्मणीति चेद् न अनेकप्रतिपत्तेर्दर्शनात्॥27॥

ननु एवम् उपरितनानां ज्ञानाधिकारे स्वीक्रियमाणे तत्पूर्वभाविष्वपि अधिकारो वक्तव्यः. कर्मणि वेदाध्ययने उपनयनादिषु च. ततश्च तेषां ब्राह्मण्याद्यभावाद् देशद्रव्याद्यभावाच्च पौराणिकेन मतेन देवान्तराभावाच्च तदभावेऽपि क्रियमाणे कर्मणि श्रुतिविरोधः इति चेद्, न, अनेकप्रतिपत्तेः दर्शनात्. बहूनां प्रतिपत्तिः दृश्यते. बहवो अत्र कर्मणि प्रवर्तमाना दृश्यन्ते. "साध्या वै देवाः सुवर्गकामाः एतत् षड्रात्रम् अपश्यत् तमाहरत् तेन अयजन्त, सो अग्निष्टोमेन वसून् अयाजयत्. सः उक्थ्येन रुद्रान् अयाजयत्, सो अतिरात्रेण आदित्यान् अयाजयद्" (तैत्ति.संहि.7।2।1) इत्यादि. "यथैकशतं वर्षाणि प्रजापताविन्द्रो ब्रह्मचर्यम् उवास" (छान्दो.उप.8।11।3) इति. भुमौ आगत्य ऋषीन् वृत्वा यज्ञकरणं च श्रूयते, "देवा वै सत्रमासत" (तैत्ति.संहि.2।3।3) इत्यादौ दर्शनवचनात् स्वस्यापि ऋत्विक्त्वं कर्मकरणं च द्योतयति.

अथवा सर्वपदार्थानाम् अनेका प्रतिपत्तिः बहुधा उपयोगो वेदे दृश्यते. यथा चतुर्धाकरणादि, परिधिप्रहरणादि, तुषोपवापादि, तद्विद्यमाने क्रियते, न अविद्यमाने तथा यत्र ये पदार्था न सन्ति तत्र कर्म तदभावेऽपि भवति. तथाहि दृश्यते. पर्वते सोमवाहकानो अभाववत्. “यज्ञेन यज्ञम अयजन्त देवाः”(ऋग्वेद 10।91।16). “इति सम्भृतसम्भारः पुरुषावयवैरहं, तमेव पुरुषं यज्ञं तेनैवायजमीश्वरम्” (भाग.पुरा.2।6।27) इत्यादिवाक्यैः सर्वसम्भृत्युपपत्तिश्च. आधुनिकान् प्रति वेदविभागाद् जैमिनेः तथानिर्णयः. तस्मात् कर्माधिकारः कर्मकरणञ्च उपर्यपि सिद्धम्॥27॥

शब्द इतिचेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्॥28॥

ननु मास्तु कर्मकरणे विरोधः शब्देतु भविष्यति. अर्थज्ञानानन्तरं हि कर्मकरणं वेदाच्च अर्थज्ञानम्. तत्र साध्यादीनां वेदएव कर्मकरणं श्रूयते. तत्र ज्ञाने कर्मकर्तृविरोधः. अन्यकल्पनायान्तु अनवस्था, व्यवस्थापकाभावात्. वेदो वसूनां वृत्तान्तं वदन् वसूनाम् अधिकारं वदेत्. वदन् वा कथम् अनित्यो न भवेद्? इति चेद्, न, अतः प्रभवात्. ‘अतः’ शब्दात् प्रभवः शब्दोक्तपदार्थानाम्.

वेदोक्ताः सर्वएव पदार्थाः आधिदैविकाएव पुरुषावयवभूताः, सर्वानुकारित्वाद् भगवतः. अतो नामप्रपञ्चो वेदात्मको भिन्नएव अङ्गीकर्तव्यः. स केवलं शब्दैकसमधिगम्यः. “वेदैश्च सर्वैरहमेव वेद्यः” (भग.गीता 15।15) इति. अतः तस्य प्रपञ्चस्य भिन्नत्वाद् न विरोधः शब्दे. कथम् एवम्? अतः आह प्रत्यक्षानुमानाभ्याम्. प्रत्यक्षं तावद् इदानीमपि यजमानो यजमानकृत्यम् ऋत्विजश्च स्वकृत्यं वेदादेव अवगच्छन्ति. नच आकृतिमात्रवाचकत्वेन (‘...कत्वेन न अविरोध’ इति पुरु.पाठः) अविरोधः, सर्वत्र लक्षणाप्रसङ्गात्, “यः सिक्तरेताः स्यात्” (तैत्ति.संहि. 5।5।4) इत्यादिषु विरोधश्च. नच प्रवृत्तिनिमित्तस्यैव वाच्यत्वं, प्रवृत्तिवैयर्थ्यापत्तेः, सङ्केतग्रहविरोधाच्च. सर्वस्यापि पदार्थस्य भगवत्त्वाद् न अनुपस्थितिदोषः सङ्केतग्रहेऽपि.

जमदग्नीनां पञ्चावत्तम् इति अनुमानम्. न हि स्वयं जामदग्न्य इति प्रत्यक्षो अनुभवो अस्ति. परोक्षव्यवहारस्यैव अनुमानत्वम् इति ब्रह्मवादः. तस्मात् प्रत्यक्षानुमानाभ्याम् इदानीन्तनभौतिकयज्ञपदार्थेषु भगवदवयवावेशः तथा अमुत्रापि. तस्माद् वैदिकः पदार्थः सर्वोऽपि आधिदैविको भिन्नः इति सिद्धम्॥28॥

अतएव च नित्यत्वम्॥29॥

साधिकां विशेषोपपत्तिम् आह. अतएव अस्मादेव हेतोः वेदस्य नित्यत्वं सर्वप्रपञ्चवैलक्षण्येन. ‘च’काराद् ब्रह्मतुल्यत्वम्. शब्दब्रह्म वेदपुरुषः इत्यादिवाच्यत्वम्. अस्यास्तु सृष्टेः ब्रह्मोपादानस्य सर्वज्ञतया कथनं तन्माहात्म्यनिरूपणार्थम्. बन्धिका हि एषा, मोचिकातु सा. अतएव ऋषीणामपि अत्र मोहः. निःश्वसितवचनाच्च. तस्यापि अयं

प्राणभूतो नित्यः इति. अर्थप्राधान्याद् ब्रह्मविद्या परा विद्या. प्रपञ्चभेदादेव लौकिक-वैदिक-शब्दव्यवहारभेदौ. तस्माद् आधिदैविकप्रतिपादकत्वाद् वेदस्य नित्यत्वम्॥29॥

समाननामरूपत्वाद् आवृत्तावप्यविरोधो दर्शनात् स्मृतेश्च॥30॥

एवं शब्दबलविचारेण वेदप्रामाण्यस्य सिद्धये भिन्नएव प्रपञ्चो हि आधिदैविकः सर्वत्र सिद्धः. इदानीम् अर्थबलविचारेण उत्तरकाण्डे किञ्चिद् आशङ्क्य परिह्रियते दार्ढ्यार्थम्. ननु अस्य प्रपञ्चस्य अनुकारित्वेन वाच्यत्वेन वा स्वीक्रियमाणत्वे सृष्टिप्रलययोः विद्यमानत्वाद् अनित्यसंयोगः प्राप्नोति तत्र आह समाननामरूपत्वाद् आवृतावपि अविरोधः. वस्तुतस्तु भगवद्रूपत्वाद् आविर्भावतिरोभावेच्छयैव तथात्वाद् न आवृत्तिशङ्कापि. तथापि लोकबुद्ध्यनुसारेण आवृत्तावपि समाननामरूपत्वात्.

समुद्रे जलप्रक्षेपवत् पुनः उपादाने तदेव इति निश्चयाभावेऽपि नामरूपयोः तुल्यत्वाद् अन्यस्य भेदकस्य अभावाद् न अनित्यसंयोगविरोधः. कुतः? दर्शनात्. दृश्यते हि तथा. वेदपितृमातृस्त्रीभर्तृशरीरगङ्गादिषु तदेव इदम् इति व्यवहारस्य सिद्धत्वात्. "सूर्याचन्द्रमसौ धाता यथापूर्वम् अकल्पयत्, दिवं च पृथिवीं चान्तरिक्षमथो सुवः" (ऋग्वेद 10।190।3) इति. स्मृतेश्च "सर्ववेदमयेनेदम् आत्मनात्मात्मयोनिना, प्रजाः सृज यथा पूर्वं याश्च मय्यनुशेरते" (भाग.पुरा.3।9।14) इत्यादिस्मृतेः. सर्वस्मृतेश्च "ऋषीणां पूर्वचरितस्मरणं स्मृतिरुच्यते" (तत्त्वदी.नि.सर्वनि.33) इति. अतो अर्थबल-विचारेपि पदार्थानां नित्यत्वाद् न वेदस्य अनित्यसम्बन्धः॥30॥

मध्वादिष्वसम्भवादनधिकारं जैमिनिः॥31॥

अर्थबलविचारएव एकदेशेन पूर्वपक्षम् आह. ननु मध्वादिविद्यासु देवानाम् अनधिकारात् सर्वत्रैव अनधिकारः. तथाहि "असौ वा आदित्यो देवमधु तस्य द्यौरेव" (छान्दो.उप.3।1।1) इत्यादिना सूर्यस्य देवमधुत्वं प्रतिपादितम्. रश्मीनां वेदत्वञ्च. तत्र वसु-रुद्रादित्य-मरुत्-साध्याः पञ्चदेवगणाः स्वमुख्येन मुखेन अमृतं दृष्ट्वैव तृप्यन्ति. पञ्चविधाएव च देवाः. स्वतःसिद्धं च तेषां तन्मधुः. अनुपासकत्वाद् न देवान्तरकल्पना कृतार्थत्वाच्च. ब्रह्मणोऽपि देवत्वम्.

'आदि'शब्देन सर्वाएव देवोपासनविद्या गृहीताः. अतः तेषाम् उपास्यत्वात् कृतार्थत्वाच्च न अधिकारः. न हि प्रयोजनव्यतिरेकेण कस्यचित् प्रवृत्तिः सम्भवति. मोक्षस्यापि अधिकारनिवृत्तौ उत्तरमार्गवर्तित्वात् स्वतएव सिद्धिः. "यावदधिकारम्" (ब्रह्मसू.3।3।32) इति न्यायात्. "वसूनयाजयद्" (तैत्ति.संहि.7।1।5) इत्यत्रापि भाविन्येव सञ्ज्ञा. तस्मात् मनुष्याधिकारकमेव ज्ञानं कर्म चेति न देवानाम् अधिकारः इति जैमिनिः आचार्यो मन्यते. मनुष्याणामेव ज्ञानकर्मणोः तरतमभाववतां तत्तद्रूपभोगानन्तरं मोक्षप्राप्तेः इति॥31॥

ज्योतिषि भावाच्च॥32॥

किञ्च तेषां सर्वेषाम् अनधिकारः प्रत्यक्षतएव दृश्यते. सर्वेहि नक्षत्रादिरूपेण महाभोगवन्तो जगदवभासकत्वेन ज्योतिःचक्रे दृश्यन्ते. "अग्निः पुच्छस्य प्रथमं काण्डम्" (तैत्ति.आर.2।19) इत्यादिश्रुतेश्च. न हि तादृशां प्राप्तैश्वर्यवतां सर्वोपास्यानां मोक्षदातॄणां ज्ञानकर्मणोः कश्चन उपयोगो अस्ति. तस्माद् अनधिकारएव देवानाम् इत्येवं प्राप्ते॥32॥

उच्यते.

भावन्तु बादरायणो अस्ति हि॥33॥

'तु'शब्दः पक्षं व्यावर्तयति. भावं देवानाम् अधिकारस्य सद्भावम्. बादरायणः आचार्यः. गौणसिद्धान्ताभावाय स्वनामग्रहणम्. किम् आर्षेण ज्ञानेन. तथा सति तुल्यत्वम् अतः आह अस्ति हि. अस्ति वेदे, "प्रजापतिरकामयत प्रजायेय" (तैत्ति.संहि.7।1।1) इति "स एतद् अग्निहोत्रं मिथुनम् अपश्यत्" "तदुदिते सूर्ये अजुहोत्" (तैत्ति.ब्राह्म.2।1।2) इति. "देवा वै सत्रमासत" (तैत्ति.संहि.2।3।3) इत्यादिभिः कर्माधिकारो निश्चितः. "तद् यो यो देवानां प्रत्यबुद्ध्यत सएव तदभवत्" (बृहदा.उप.1।4।10) इत्यादि. तथा इन्द्र-प्रजापतिसंवादे "ब्रह्मा देवानाम्" (तैत्ति.संहि.3।4।11) इति च. एवम् एवंविधैः वाक्यैः देवानामपि अधिकारो अस्ति. यत्र च पुनः देवानां फलभोगएव प्रतीयते, न करणं, तत्रापि तेषाम् अधिकारो अङ्गीकर्तव्यः. हि युक्तो अयम् अर्थः. एते हि वसवः आधिदैविकभगवदवयवभूताः, अनशनात्. अन्यथा वसुत्वादिविरोधः. "यद् वसूनां प्रातःसवनम्" (तैत्ति.ब्राह्म.1।5।11) इत्यादिवत्. न हि जीवविशेषा दृष्ट्वा तृप्यन्ति. तस्माद् इदं ब्रह्मप्रकरणमेव. योऽपि देवोपासनवत् प्रतीयते सः भगवदंशएव आधिदैविकः. न वा पूर्वकल्पेन निर्णयः. तथा सति तेषाम् अभावाद् अनुपास्यत्वम्. अनित्यता च वेदस्य स्यात्. तस्माद् देवानामपि अधिकारः इति शब्दबलविचारएव युक्तः इति सिद्धम्॥33॥

इति प्रथमाध्याये तृतीयपादे अष्टमं तदुपर्यपि अधिकरणम्॥8॥

## शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि॥34॥(1।3।9)

इदानीं शूद्रस्य अधिकारो निराक्रियते. यथा कर्मणि "एतया निषाद-स्थपतिं याजयेत् सा हि तस्येष्टिः" (आप.श्रौ.सू.9।14।12) इतिश्रुतेः "हविष्कृदाधाव" (शुक्ल.य.वेद 1।15) इति शूद्रस्य इति लिङ्गाद् दोहादौ च शूद्रस्य अधिकारः. एवम् इहापि संवर्गविद्यायां शूद्रस्य अधिकारः इति तन्निराकरणार्थम् इदम् अधिकरणम् आरभ्यते.

एवं श्रूयते, "जानश्रुतिर्ह पौत्रायणः" (छान्दो.उप.4।2।3) इत्यत्र हंसवाक्यश्रवणानन्तरं सयुग्वनो रयिक्वस्य समीपं गतः जानश्रुतिः पौत्रायण "रयिक्वेमानि

षट् शतानि गवाम्" (छान्दो.उप.4।2।2) इत्यादिना देवतां पृष्टः प्रति उवाच. "अह हारे त्वा शूद्र तवैव सह गोभिरस्तु" (तत्रैव 4।2।3) इत्यादिना जानश्रुतिं 'शूद्र'शब्देन सम्बोध्य, पुनश्च, "शूद्रानेन मुखेन" (छान्दो.उप.4।2।5) इति उक्त्वा संवर्गविद्याम् उपदिष्टवान्. अतो अत्र विद्यायां जातिशूद्रस्यापि अधिकारः इति आशङ्क्य परिहरति.

न अत्र 'शूद्र'शब्दो जातिशूद्रवाची किन्तु 'मत्सरयुक्तः त्वम् अत्र न अधिकारी'ति तथा सम्बोधनम्. तद् आह शुक् शोकः, अस्य जानश्रुतेः समजनि. तत्र हेतुः तदनादरश्रवणात्. तस्माद् हंसाद् अनादरस्य श्रवणात्. "कंवर एनम् एतत् सन्तं सयुग्वानमिव रयिक्वम् आत्थ" (छान्दो.उप.4।1।3) इति स्वापकर्षश्रवणात्. किम् अतो यद्येवम् अतः आह तदाद्रवणात्. तत् तदनन्तरम् आद्रवणात्. शुचमनु आद्रवतीति शूद्रः. परोक्षवादार्थं दीर्घः सर्वज्ञत्वख्यापनाय. "रूढिः योगम् अपहरति" इति न्यायात्. कथम् एवम्? अतः आह सूच्यते हि. स्वस्य सर्वज्ञत्वं सूच्यते. हंसवाक्यात् शोके जाते, त्वम् आगतः इति. अन्यथा प्रपन्नस्य धिक्कारवचनम् अनर्थकं स्यात्. युक्तश्च अयम् अर्थो ब्रह्मविदः सर्वज्ञता इति. तस्य मात्सर्यनिराकरणं वा सम्बोधनफलम्. तस्मात् शुचं प्रत्याद्रवणादेव 'शूद्र'पदप्रयोगो न जातिशूद्रवाची॥34॥

कुतः एवम्? अतः आह

क्षत्रियत्वावगतेश्च उत्तरत्र चैत्ररथेन लिङ्गात्॥35॥

जानश्रुतेः पौत्रायणस्य क्षत्रियत्वम् अवगम्यते, गो-निष्क-रथ-कन्या-दानात्. न हि क्षत्तृप्रभृतयो हि एते क्षत्रियाद् अन्यस्य सम्भवन्ति, राजधर्मत्वात्. नहि अन्यो ब्राह्मणाय भार्यात्वेन कन्यां दातुं शक्नोति. नच प्रथमहंसवाक्यं शूद्रे सङ्गच्छते. उपदेशाच्च इति 'च'कारार्थः.

तथापि संवर्गविद्यायां शूद्रस्यैव अधिकारं मन्वानस्य निराकरणार्थं हेतुम् आह उत्तरत्र चैत्ररथेन लिङ्गात्. "अथ ह शौनकं च कोपेयमभिप्रतारिणं च काक्षसेनिम्" (छान्दो.उप.4।3।5) इति उत्तरत्र ब्राह्मण-क्षत्रियौ तौ निर्दिष्टौ. कक्षा सेना यस्य इति. कक्षसेनस्य अपत्यं काक्षसेनिः इति. अस्य व्याख्यानं, चैत्ररथः इति. चित्रा रथा यस्य तस्य अपत्यं, तेन चैत्ररथेन. कक्षारूपा रथा इति. व्याख्यानम्. "एतेन वै चित्ररथं कापेया अयाजयन्" (ताण्ड्यब्रा.20।12।5) इति. शौनकश्च कापेयो याजकः. याज्यश्च चित्ररथस्य पुत्रः काक्षसेनिः इति. ब्रह्मचारी ब्रह्मवित्. इमौतु संवर्गविद्योपासकौ. प्राणाय हि भिक्षा. तस्माद् न ददतुः. उभावपि श्लोकौ भगवतः. तेन प्रकृतेऽपि एतौ गुरु-शिष्यौ. ब्राह्मण-क्षत्रियावेव इति गम्यते. तस्माद् न जातिशूद्रः संवर्गविद्यायाम् अधिकारी॥35॥

संस्कार-परामर्शात् तदभावाभिलापाच्च॥36॥

इदानीं शूद्रस्य क्वचिदपि ब्रह्मविद्यायाम् अधिकारः चेद् अत्रापि कल्प्येत. तच्चु नास्ति, सर्वत्र संस्कारपरामर्शात्. उपनयनसंस्कारः सर्वत्र परामृश्यते "तं होपनिन्ये" (शत.ब्राह्म.11।5।3।13) "अधी हि भगव इति होपससाद" (छान्दो.उप.7।1।1). "तान् हानुपनीय" (तत्रैव 5।11।7) इत्यादिप्रदेशेषु उपनयनपूर्वकमेव विद्यादानं प्रतीयते, शूद्रस्य तु तदभावाभिलापात्. "चतुर्थम् एकजातिस्तु शूद्रः" (मनुस्मृ.10।4) इति, "न शूद्रे पातकं किञ्चिद् न च संस्कारम् अर्हति" (तत्रैव 10।12) इति शूद्रस्य संस्कारनिषेधात्. 'च'काराद् "न शूद्राय मतिं दद्यात्" (तत्रैव 4।80) इति निषेधः॥36॥

तदभावनिर्धारणे च प्रवृत्तेः॥37॥

इतश्च न शूद्रस्य सर्वथा अधिकारः. तदभावनिर्धारणे शूद्रत्वाभाव-निर्धारणएव गुरुशिष्यभावप्रवृत्तेः. "सत्यकामो ह जाबालः" (छान्दो.उप. 4।4।1) इत्यत्र गौतमः सत्यकामम् उपनिन्ये. "नैतद् अब्राह्मणो विवक्तुम् अर्हति" (छान्दो.उप.4।4।5) इति सत्यवचनेन शूद्राभावं ज्ञात्वैव. 'च'कारः एवार्थे. 'च'कारेण निर्धारणम् उभयज्ञानार्थम्. वर्णित्वं शूद्राभावं च. तस्माद् न शूद्रस्य अधिकारः॥37॥

श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च॥38॥

दूरे हि अधिकारचिन्ता. वेदस्य श्रवणम्, अध्ययनम्, अर्थज्ञानं त्रयमपि तस्य प्रतिषिद्धम्, तत्सन्निधौ अन्यस्य च. "अथास्य वेदम् उपश्रृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्" (गौत.ध.सू.2।3।4) इति. "यद्यु ह वा एतत् श्मशानं यच् छूद्रः" (व.ध.सू.18।11,12) तस्मात् शूद्रसामिप्ये न अध्येतव्यम् इति. "उदाहरणे जिह्वाच्छेदो, धारणे शरीरभेदः" (गौत.ध.सू.12।4) इति. दोहादौ शूद्रसम्बन्धे मन्त्राणाम् अभावएव.

स्मृतिप्रयुक्त्यापि वेदार्थे न शूद्राधिकारः इति आह स्मृतेश्च. "वेदाक्षर-विचारेण शूद्रः पतति तत्क्षणात्" (पार.स्मृ.1।73) इति. 'च'कारस्तु अधिकरणसम्पूर्णत्वद्योतकः. स्मार्त्त-पौराणिकज्ञानादौतु कारणविशेषेण शूद्रयोनिगतानां महताम् अधिकारः. तत्रापि न कर्मजातिशूद्राणाम्. तस्माद् नास्ति वैदिके क्वचिदपि शूद्राधिकारः इति स्थितम्॥38॥
इति प्रथमाध्याये तृतीयपादे नवमं शुगस्य इति अधिकरणम्॥9॥

कम्पनात्॥39॥
कठवल्लीविचारेण निश्चिता ह्यधिकारिणः॥
वाक्यान्तरं च तत्रत्यं चिन्त्यते प्रलयावधि॥21॥

"यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतं महद्भयं वज्रमुद्यतं य एतद् विदुः अमृतास्ते भवन्ति" (कठोप.2।6।2) इत्यत्र प्राण-वज्रोद्यमन-शब्दाभ्यां सन्देहः. किं प्राणोपासना, इन्द्रोपासना वा, ब्रह्मवाक्यं वा? इति. बाधकशब्दस्य श्रुतित्वाद् न प्रकरणेन

निर्णयः. "अमृतं वै प्राणाः" (तैत्ति.संहि.2।6।8) इति श्रुतेः. प्राणोपासकस्यापि अमृतप्राप्तिः युज्यते. इन्द्रस्यापि अमरत्वात्. "वज्रम् उद्यतम्" इति प्राणपक्षे वियोजने मरणजनकत्वाद् भयरूपत्वम्. इन्द्रपक्षे बलाधिष्ठातृत्वात् प्राणत्वम्. तस्मात् प्राणः इन्द्रो वा वाक्यार्थः इत्येवं प्राप्ते उच्यते कम्पनात्. कम्पनम् अत्र प्रथमवाक्यार्थः. स च भयहेतुकः. अविशेषेण सर्वजगत्कम्पनं भगवद्धेतुकमेव भवति.

नच एकान्ततो वज्र इन्द्रस्यैव आयुधं भवति, अग्निहृदयत्वात्. "तस्य तान्तस्य हृदयमाच्छिन्दत् साशनिर् अभवद्" (तैत्ति.ब्राह्म.1।1।3) इति श्रुतेः. तस्मात् मारकरूपमेव इदं भगवतः. 'प्राण'शब्दवाच्यत्वन्तु पूर्वमेव सिद्धम्. तस्मात् सर्वजगत्कम्पनं भगवत्कृतमिति भगवानेव वाक्यार्थः॥39॥

इति प्रथमाध्याये तृतीयपादे दशमं कम्पनाधिकरणम्॥10॥

## ज्योतिर्दर्शनात्॥40॥ (1।3।11)

"य एष सम्प्रसादो अस्मात् शरीरात् समुत्थाय परं ज्योतिरभिसम्पद्य स्वेन रूपेण अभिनिष्पद्यते" (छान्दो.उप.8।12।3) इति. तत्र संशयः : परं ज्योतिः महाभूतरूपं ब्रह्म वा? इति.

ब्रह्मधर्माश्च ये केचित् सिद्धा युक्त्यापि साधिताः।
निर्णायकास्ततोप्यन्ये चत्वारोऽत्र निरूपिताः॥22॥

तत्र रूढ्या उपपत्त्या च महाभूतमेव ज्योतिः इति एवं प्राप्ते, उच्यते ज्योतिः ब्रह्मैव. कुतः? दर्शनात्. सर्वत्र दर्शनं न्याय इति यावत्. सुषुप्तौ सर्वत्र "सता सौम्य तदा सम्पन्नो भवति. सति सम्पद्य न विदुः सति सम्पद्यामहे" (छान्दो.उप.6।9।2) इति. "अहरहर्ब्रह्मलोकं गच्छन्ति" (तत्रैव 8।3।2) इत्यादिप्रदेशेषु ब्रह्मसम्पत्तिरेव उक्ता. अत्रापि सम्प्रसादवचनात् परं ज्योतिः ब्रह्मैव. तस्माद् यः कश्चन शब्दो ब्रह्मस्थाने पठितः तद्वाचकएव इति॥40॥

इति प्रथमाध्याये तृतीयपादे एकादशं ज्योतिः अधिकरणम्॥11॥

## आकाशो अर्थान्तरत्वादिव्यपदेशात्॥41॥ (1।3।12)

"आकाशो वै नामरूपयोः निर्वहिता ते यदन्तरा तद् ब्रह्म" (छान्दो. उप.8।14।1) इति श्रूयते. तत्र 'आकाश'शब्दे सन्देहः : भूताकाशः परमात्मा वा? इति. नामरूपनिर्वाहमात्रत्वम् अवकाशदानाद् भूताकाशस्यापि भवतीति न ब्रह्मपरत्वम्. अन्यस्य च नियामकस्य अभावाद् इत्येवं प्राप्ते, उच्यते आकाशः परमात्मा, अर्थान्तरत्वादिव्यपदेशात्. यद् भूताकाशस्य प्रयोजनं श्रुतिसिद्धं, तस्माद् अन्यस्य व्यपदेशः कार्यान्तरादिव्यपदेशश्च. यत्रैव हि सिद्धवत्कारेण उत्कृष्टधर्मा अतदीयाः तदेव ब्रह्म इति.

नापि नामरूपनिर्वाह आकाशस्य माहात्म्यहेतुः भवति. वै निश्चयेन इति सिद्धवत्काराद् न उपासनापरत्वम्.

निर्वाहस्य ब्रह्मधर्मत्वं न श्रुत्यन्तरसिद्धम् इति विचारः. अर्थापत्ति-सूचकस्तु अयमेव न्यायः इति. तस्माद् यत्रैव अतद्धर्मकथनम् अन्यवाच्यस्य तत्रैव ब्रह्मपरत्वम् इति सिद्धम्॥41॥

इति प्रथमाध्याये तृतीयपादे द्वादशम् अर्थान्तराधिकरणम्॥12॥

## सुषुप्त्युत्क्रान्त्योः भेदेन॥42॥ (1।3।13)

बृहदारण्यके ज्योतिर्ब्राह्मणे "याज्ञवल्क्य किं ज्योतिरयं पुरुषः"(बृहदा. उप.4।3।2) इत्यारभ्य, "अभयं ह वै ब्रह्म भवति य एवं वेद" इत्यन्ते सन्देहः : किं ब्रह्मवाक्यम् एतद् उत जीवस्य? इति. जीवस्य ब्रह्मत्वप्रतिपादने जीववाक्यत्वम्. स्वातन्त्र्येण ब्रह्मणएव ज्ञानकर्मत्वे ब्रह्मवाक्यत्वम् इति. यद्यपि अर्थज्ञाने न सन्देहः तथापि नियामकं हेतुम् आह भेदेन इति. तस्य अयम् अर्थः : "किंज्योतिरयं जीवः" (तत्रैव 4।3।2) इति प्रश्ने सूर्य-चन्द्राग्नि-वाङ्-निराकरणानन्तरम् 'आत्मज्योतिः'. आत्मा भगवानेव अस्य ज्योतिः इति उत्तरानन्तरं "कतम आत्मा" (तत्रैव 4।3।7) इति प्रश्ने "योऽयं विज्ञानमयो ज्ञानरूप इन्द्रियेषु हृदि च प्रकाशमानः" (तत्रैव 4।3।7) इति उत्तरे, जीवोऽपि एतादृशः इति तन्निराकरणार्थं "स समानः सन्" (तत्रैव 4।3।7) जीवतुल्यः सन् क्रीडति इति आह.

तस्य उभयधर्माअपि उच्यन्ते क्रियामात्रस्य तन्मूलत्वाय. तत्र हि चत्वारि स्थानानि : अयं लोकः परलोकः स्वप्नः इति त्रयं जीवसमानतया अनुभवति. तत्र स्वप्नस्य मिथ्यात्वाद् द्वयमेव, सुषुप्तं च चतुर्थम्. जीवस्यतु मोक्षोऽपि.

तत्र अस्मिन् लोके जीवस्य अनीशित्वं प्रत्यक्षसिद्धम्. मोक्षेतु ऐक्यम्. स्वप्नस्तु माया. अतःपरं द्वयम् अवशिष्यते. तत्र श्रुत्यैव भेदः प्रतिपादितः.

तत्र भगवतो जीवसाम्ये अन्तःकरणेन्द्रियधर्माः प्राप्नुवन्तीति तत्र अनुकरणम् आह "ध्यायतीव लेलायतीव" (बृहदा.उप.4।3।7) इति. बुद्धिसहितः स्वयमेव स्वप्नो भूत्वा जागरणानुसन्धानं न करोति. एवं जाग्रत्स्वापौ ब्रह्मणो लोकद्वयम्. जीवस्य स्थानत्रयम् आह "स वा अयम्" (तत्रैव 4।3।15) इति कण्डिकाद्वयेन. सः इति पूर्वप्रक्रान्तो जीवः. जीवस्य शरीरेन्द्रियाणां दुःखदातृत्वमेव. अथ इति भगवच्चरित्रम्. सतु स्वस्य आनन्दं जीवस्य दुःखं च पश्यति.

भेदो 'अथ'शब्दात्. जीवस्य अनीशित्वात् येन प्रकारेण अयं जीवः परलोके गच्छति तम् उपायं भगवानेव करोति. "अथो खलु" (तत्रैव 4।3।14) इति भगवतो न जागरित-स्वप्नभेदो अस्ति इति पक्षः. परं स्वयंज्योतिष्ट्वं तत्र स्पष्टम्. एतावद् दूरे भगवच्चरित्रम् अङ्गीकृत्य जीवविमोक्षार्थं प्रश्नः. "स वा एष" (तत्रैव 4।3।16) इति

जीववाक्यम्. तस्य सहजः सङ्गो नास्ति इति स्वप्नसङ्गाभावं प्रत्यक्षतः प्रदर्शयन् असङ्गत्वम् आह. तावतापि जागरणा-वस्थायाम् असङ्गत्वज्ञानाय पुनः प्रश्नः. तत्र मस्यदृष्टान्तो अवस्थाभेदज्ञानाय क्रियाज्ञानप्रधानः.

श्येन-सुपर्ण-दृष्टान्तस्तु सुषुप्तौ भगवत्स्वरूप-प्राप्तये अवस्थान्तः. 'यत्र' इति च भगवान्. पञ्चवर्णनाडीकृतएव अस्य क्लेशो भगवत्कृतएव आनन्दः इति स्वप्नानन्दो भगवद्रूपः परमो लोकः. सुषुप्तिस्तु अकामरूपो भगवान्. अत्र ज्ञानाभावाद् उभयोः स्पष्टतया भेदनिर्देशः. "शारीरः प्राज्ञः" (तत्रैव 4।3।21) इति.

नाड्याच्छादनाभावो "अतिच्छन्दः" (तत्रैव 4।3।21), तत्र भगवत्स्वरूपं गतस्य बाह्येन्द्रियधर्माभावम् आह "विजानीयाद्" (तत्रैव 4।3। 31) इत्यन्तेन. बाह्येन्द्रियाणां सलिलत्वम् इति पूर्वोपपत्तिः.

"एषः ब्रह्मलोकः" (तत्रैव 4।3।32) इत्यारभ्य, "अनुशशासैतद-मृतम्" (तत्रैव 4।3।33) इत्यन्तेन आन्दरूपो भगवान् प्रतिपादितः फलत्वाय. एतावता उभयासङ्गः प्रतिपादितः.

तस्य अनुभवारूढत्वाय पुनः प्रश्नः. दर्शनादर्शनावापोद्वापाभ्यां सिद्धम् "असङ्गो ह्ययं पुरुषः" (बृहदा.उप.4।3।15) इति. एवं जीवं सुषुप्तौ भगवन्तं च ज्ञात्वा मोक्षोपायं पृच्छति(तत्रैव 4।3।33). तत्र याज्ञवल्क्यस्य भयं जातं, सुबुद्धिः अयं निर्बन्धेनापि सर्वं ज्ञास्यति इति जीवब्रह्मधर्मान् एकीकृत्य जीवोपक्रमेण ब्रह्मोपसंहारेण आह(तत्रैव 4।3।33-4।4।23). तत्र, "स यत्र" (तत्रैव 4।3।36) इति जीवस्य मूर्च्छोपतापावस्था. "तद्यथा अन" (तत्रैव 4। 3।35) इति मरणावस्था. तत्र भगवानेव एनं लोकान्तरे नयति. "तद्यथा राजानम्"(तत्रैव 4।3।37) इति भगवत्सन्मानम्, "एवंविदम्" (तत्रैव 4।3। 37) इति वचनात्. जीवस्तु न एवंवित्. सिद्धवद् वचनाद् न ज्ञानविधिः, वाक्यभेदप्रसङ्गाच्च. "स यत्र" (तत्रैव 4।4।1) इति जीवे मोहो अधिकः. "अथ एनम् एते प्राणाः" (तत्रैव 4।4।1) इति भगवच्चरित्रं सम्पद्यते इत्यन्तेन श्लोके (तत्रैव 4।4।6) तद् ब्रह्म 'अस्य' जीवस्य 'अकामयमानस्य' भगवतः स्वरूपं पूर्वमेव उक्तम् अनुवदति. भगवन्निर्गमने हि प्राणानां निर्गमनात्. तस्य च इच्छाधीनत्वात्. तदभावे इन्द्रियाणि सुषुप्तौ तत्रैव "समवलीयन्ते". "ब्रह्मैव सन्" (तत्रैव 4।4।6) कूटस्थः सन्. 'अपिः' (तत्रैव 4।4।6) समुच्चये. सह स्थिते जीवे ब्रह्म आविर्भवति इति अर्थः. जीवे ब्रह्माविर्भावो न सङ्गतः इति तत्प्रतिपादनार्थं श्लोकः(तत्रैव 4।4।7). जीवोपदेशप्रकरणाभवेन सिद्धवद्-वचनाद् न जीवन्मुक्तावस्था. नापि असम्प्रज्ञातसमाधिः, मतान्तरत्वात्. ब्रह्मप्रकरणत्वाद् न जीवस्य सद्यो मुक्तिः फलम्, उत्क्रमणएव ब्राह्मणस्यापि उक्तत्वात्. "तद् यथा" (तत्रैव 4।4।7) इति सुषुप्तशरीरम्. "अनस्थिक..." (तत्रैव 4।4।7) इत्यादि, "सम्राड्" (तत्रैव 4।4।7) इत्यन्तम् उपसंहारः.

श्लोकाः अत्र त्रयोदश सर्वनिर्धारकाः. आद्यो (तत्रैव 4।4।8) ब्रह्मविद्ग्तेः. 'एषः' (तत्रैव 4।4।9) इति सुषुप्तौ नाडीत्वात् पञ्चवर्णाः. "अन्धन्तमः" (तत्रैव 4।4।

10,11) इति द्वाभ्याम् अनेवंविदो निन्दा. “तदेव सन्तः” (तत्रैव 4।4।14) इति बुद्धिमतां वचनम्. “आत्मानम्” (तत्रैव 4।4।12) इति वैराग्यम्. “यस्यानुवित्तिः” (तत्रैव 4।4।13,15-21) इति नवभिः ब्रह्मस्तुतिः, तद्विज्ञानं च. पुनः एतदेव स्पष्टतया उपदिशति. “स वा अयमात्मा” (बृहदा.उप.2।5।15) इत्यादि “अभयं वै जनकः प्राप्तोऽसि” (तत्रैव 4।2।4) इत्यन्तम्. काण्वानां क्वचित् पाठभेदेपि अयमेव अर्थः.

अत्र प्रकरणे जीवो वाच्यः इति प्राप्ते, अभिधीयते.

ब्रह्मैव प्रकरणार्थः. सुषुप्तौ उत्क्रमणे च जीव-ब्रह्मणोः भेदेन व्यपदेशात्. आकाशवद् ब्रह्मनिर्धारएव युक्तः॥42॥

पत्यादिशब्देभ्यः॥43॥

किञ्च. “सर्वस्य वशी” (बृहदा.उप.4।4।22) इत्यादिशब्देभ्यः स्पष्टमेव ब्रह्मप्रकरणम् इति॥43॥

इति प्रथमाध्याये तृतीयपादे त्रयोदशं सुषुप्त्युत्क्रान्त्यधिकरणम्॥13॥

इति श्रीवेदव्यासमतवर्ति-श्रीवल्लभाचार्य-विरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये प्रथमाध्यायस्य तृतीयः पादः॥

## प्रथमाध्यायस्य

## चतुर्थः पादः

### आनुमानिकमपि एकेषाम् इति चेद्, न,

### शरीररूपकविन्यस्तगृहीतेर् दर्शयति च॥1॥ (1।4।1)

एवं सर्वेषां वेदान्तानां ब्रह्मपरत्वे निर्णीते, केचिद् वेदार्थाज्ञानात् क्वचिद् वेदभागे कापिलमतानुसारिपददर्शनेन तस्यापि वेदमूलकत्वं वदन्ति. तन्निराकरणाय चतुर्थः पादः आरभ्यते. तत्र, “ईक्षतेर्नाशब्दम्” (ब्रह्मसू.1।1। 4) इति सांख्यमतम् अशब्दत्वाद् इति निवारितम्. वेदेन प्रतिपादितम् इति तत्र आशङ्कते. आनुमानिकमपि एकेषाम्. एकेषां शाखिनां शाखासु सांख्य-परिकल्पित-प्रकृत्यादि श्रूयते.

“इन्द्रियेभ्यः परा ह्यर्थाः अर्थेभ्यश्च परं मनः,<br>
मनसस्तु परा बुद्धिः बुद्धेः आत्मा महान् परः,<br>
महतः परमव्यक्तम् अव्यक्तात् पुरुषः परः,<br>
पुरुषात् न परं किञ्चित् सा काष्ठा सा परा गतिः”

(कठोप.1।3।10,11)

इति काठके श्रूयते. तत्र बुद्धेः आत्माहङ्कारः. ततो महान् महत्तत्त्वम्. ततो अव्यक्तं प्रकृतिः. ततः पुरुषः इति. नहि अहङ्कारादयः पदार्थाः ब्रह्मवादे सम्भवन्ति. तस्माद् एवञ्जातीयकेषु तन्मतपदार्थानां श्रवणाद् मायाप्रकृत्य-विद्यावादापि श्रौता इति चेद्, न. शब्दसाम्यमात्रेण न तन्मतं सिद्ध्यति.

सन्दिग्धानां पदार्थानां पौर्वापर्येण निर्णयः॥
न तु सन्दिग्धवाक्येन सर्वव्याकुलतोचिता॥23॥

अत्र हि पूर्वम्

"आत्मानं रथिनं विद्धि शरीरं रथमेव तु,
बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च,
इन्द्रियाणि हयानाहुः विषयांस्तेषु गोचरान्,
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" (कठोप.1।3।3,4)

तदनु चत्वारि वाक्यानि "यस्त्वविज्ञानवान्" (तत्रैव 1।3।5) इत्यादि. तदनु "इन्द्रियेभ्यः परा" (तत्रैव 1।3।10) इति. तत्र पूर्वसम्बन्धएव अर्थः उचितः. तम् आह शरीररूपक-विन्यस्त-गृहीतेः. शरीरेण रूप्यन्ते ये शरीरेन्द्रियादयः ते विन्यस्ता यत्र रूपकभावेन रथादिषु तेषामेव अत्र गृहीतिः ग्रहणम्. अन्यथा प्रकृतहानाप्रकृतपरिग्रहापत्तिः.

जीवप्रकरणं ह्येतन् मुक्त्युपायोऽस्य रूप्यते॥
योग्यं शरीरमारुह्य गच्छेद् इति हरेः पदम्॥24॥

तत्र जीवस्य ब्रह्मप्राप्तौ मुख्यं साधनं शरीरम्. सः रथः. सर्वसामग्री-सहिताऽपराधीनयानत्वात्. रथस्तु हयाधीनः. हयाश्च स्वबुद्ध्यधीनाः. साच प्रग्रहाधीना. सच सारथ्यधीनः. सच स्वबुद्ध्यधीनः. साच मार्गाधीना. सच प्राप्याधीनः इति. एवं ज्ञात्वा युक्तसामग्रीकः तद्देशं प्राप्नोति. तत्र इन्द्रियाणाम् आत्मा विषयाः. ते च मनसा सम्यक्त्वेन भाविताः तथा भवन्ति, विरक्तेन्द्रियाणाम् अतथात्वात्. बुद्धेः आत्मा विज्ञानं, तद् ब्रह्मविषयकं महद्भवति. ततः परम् अव्यक्तं, न प्रकटं भगवत्कृपैव. सातु भगवदधीना, न साधनान्तराधीना. सच भगवान् स्वाधीनः इति. एवमेव अर्थः तस्य उचितः. किञ्च, दर्शयति स्वयमेव इमम् अर्थम् "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते, दृश्यते त्वग्र्या बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" (कठोप.1।3।12) इति. सूक्ष्मया उपनिषदनुसारिण्या बुद्ध्या. भगवज्ज्ञाने हि तत्प्राप्तिः इति. 'च'कारात् "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्" (भग.गीता 18।55) इति स्मृतिः गृहीता. तस्मात्, साधनोपदेशात् न सांख्यमतम् इह विवक्षितम् इति॥1॥

सूक्ष्मं तु तदर्हत्वात्॥2॥

ननु 'अव्यक्त'शब्देन न भगवत्कृपा वक्तुं शक्या, धर्मिप्रवाहाद् इति आशङ्क्य परिहरति 'तु'शब्दः. सूक्ष्मं तद् ब्रह्मैव, धर्म-धर्मिणोः अभेदात्. 'अव्यक्त'शब्देन हि सूक्ष्मम्

उच्यते. तदेव हि सर्वप्रकारेण न व्यज्यते, अर्हत्वात्. तदेव अर्हं योग्यम्. उभयत्रापि अयं हेतुः. तस्माद् धर्म-धर्मिणोः अभेदाद् भगवानेव सूक्ष्ममिति तत्कृपैव अव्यक्तवाच्या॥2॥

तदधीनत्वाद् अर्थवत्॥3॥

ननु धर्मित्वे परत्वम् अनुपपन्नम् अन्यथा पूर्वोक्तो दोषः इत्यतः आह. अभेदेऽपि कृपायाः तदधीनत्वात् परत्वम्. तत्र दृष्टान्तः अर्थवत्. अर्थः पुरुषार्थः फलं, तद्वत्. "ब्रह्मविदाप्नोति परम्" (तैत्ति.उप.2।1) इत्यत्र एकस्यैव ब्रह्मणः सच्चिद्रूपेण विषयत्वम् आनन्दरूपेण फलत्वम् इति. तथैव अक्षरपुरुषोत्तम-विभागोऽपि. स्वधर्मापि स्वाधीनाः. स्वयमपि स्वाधीनः इति. तथा कृपाविष्टः साधनम्, आनन्दरूपः फलम् इति. अथवा अव्यक्तं सच्चिद्रूपम् अक्षरमेव अस्तु. तस्मिन् सति विज्ञानस्य विषयाधीनत्वम् अर्थः. एतेन अन्येऽपि सर्वसम्प्लववादिनो निराकृता वेदितव्याः. असम्बद्धाभिलापाच्च.

अनेकरूढिशब्दानां वाच्यं ब्रह्मैव नापरम् ।<br>
शाक्तास्तांश्चेत् तथा ब्रूयुः ते सन्मार्गाद् बहिष्कृताः॥

तस्माद् इन्द्रियेभ्यः परवाक्ये न अनुमानिकं किञ्चिद् अस्ति॥3॥

ज्ञेयत्वावचनाच्च॥4॥

पूर्वापरसम्बन्धेन अर्थः प्रतिपादितः. केवलैतद्वाक्यविचारेऽपि न तदभीष्टं प्रकृतिरूपम् अव्यक्तं सिध्यति इति आह. अत्र हि वाक्ये अव्यक्तं ज्ञेयत्वेन न उक्तं, तेषान्तु प्रकृतिपुरुषान्तरं ज्ञातव्यम्. न हि सिद्धवन्मात्रनिर्देषे तेषां मते पुरुषार्थः सिध्यति. अपुरुषार्थसाधनत्वे वा असम्बद्धार्थवाक्यत्वमेव स्यात्. परत्ववचनं च असङ्गतम्. श्लिष्टत्वाद् उभयोः इति 'च'कारार्थः. अयं हेतुः पूर्वम् उक्तोऽपि अवसरे स्मारितः. तस्माद् अव्यक्तं न प्रकृतिः॥4॥

वदति इति चेद् न प्राज्ञो हि प्रकरणात्॥5॥

ननु ज्ञेयत्वावचनम् असिद्धम्. पूर्वं निर्देशमात्रम् उक्त्वा अग्रे ज्ञेयत्ववचनाद् "अशब्दम् अस्पर्शम् अरूपम् अव्ययं तथा अरसं नित्यम् अगन्धवच्च यद् अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते" (कठोप.2।3। 15) इति उत्तरवाक्ये वदति इति चेद्, न. प्रकरणस्य नियामकत्वेन एकवाक्यत्वे द्वयोः सर्वैकवाक्यत्वेन प्राज्ञः परमात्मैव निचाय्यः नतु द्वयोरेव एकवाक्यत्वं वक्तुं शक्यम्. तस्मात् प्रकरणस्य नियामकत्वे अशब्द-वाक्यमपि भगवत्परमेव॥5॥

त्रयाणामेव च एवम् उपन्यासः प्रश्नश्च॥6॥

ननु न वयं सर्वम् एकं प्रकरणम् इति वदामः किन्तु, "इन्द्रियेभ्यः परा" (कठोप.1।3।10) इति आरभ्य "नाचिकेतम् उपाख्यानम्" (तत्रैव 1।3।16) इत्यन्तं भिन्नं प्रकरणम्. तत्र प्रथमं पदार्थनिर्देशः. तदनु "एषः सर्वेषु भूतेषु" (तत्रैव 1।3।12) इति पुरुषज्ञानम्, अशब्दम् इतितु प्रकृतिज्ञानम्. तस्माद् एतावत्प्रकरणे साङ्ख्यमतनिरूपणाद् अशब्दत्वम् असिद्धम् इति आशङ्क्य परिहरति त्रयाणाम् एवम् उपन्यासः प्रश्नश्च. अस्मदुक्तव्याख्याने त्रिप्रकरणत्वम् अन्यथा चतुःप्रकरणत्वं स्यात्. तृतीया च एषा वल्ली. "स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्" (तत्रैव 1।1।13) इति प्रश्नः प्रथमः. "प्रतिब्रवीमि तदु मे निबोध स्वर्ग्यम् अग्निं नाचिकेत प्रजानन्" (तत्रैव 1।1।14) इत्याद्युतरम्. "येयं प्रेते विचिकित्सा मनुष्येस्ति इत्येके नायमस्तीति चैके" (तत्रैव 1।1।20) इति द्वितीयः प्रश्नः. "देवैरत्रापि" (तत्रैव 1।1।22) इति अग्रे उत्तरम्. "अन्यत्र धर्माद् अन्यत्राधर्माद्" (तत्रैव 1।2।15) इति तृतीयः प्रश्नः. "सर्वे वेदा यत् पदम् आमनन्ति" (तत्रैव 1।2।15) इत्यादिना उत्तरम्. एवम् अग्नि-जीव-ब्रह्मणां प्रश्नोत्तराणि. तत्र यदि साङ्ख्यमतं निरूपणीयम्, "इन्द्रियेभ्यः" (तत्रैव 1।3।10) इत्यादि स्यात् तदा चतुर्थस्यापि उपन्यासः स्यात्. उपन्यासे हेतुः प्रश्नः. अतएव पश्चाद् वचनम्. तस्य प्रकृते अभावाद् अस्मदुक्तरीत्या त्रीण्येव प्रकरणानि इति सिद्धम्. उत्तरप्रश्नभावार्थं 'च'कारः॥6॥

महद्वच्च॥7॥

ननु तथापि मतान्तरे अन्यत्र सङ्केतिताः कथं ब्रह्मवादे ब्रह्मपरतया योज्यन्ते? इति आशङ्क्य परिहरति महद्वत्. यथा 'महत्'शब्दो "महान्तं विभुम् आत्मानं"(कठोप.1।2।22) "वेदाहमेतं पुरुषं महान्तम्" (श्वेता.उप.3।8) इत्यादौ 'महत्'शब्दो ब्रह्मपरो योगेन. एवम् 'अव्यक्त'शब्दोऽपि अक्षरवाचकः इति. न हि सांख्यमतइव वेदान्तेऽपि 'महत्'शब्दः प्रथमकार्ये वक्तुं शक्यते. तस्माद् इन्द्रियादिवाक्ये सांख्यपरिकल्पितानां पदार्थानां नामापि नास्ति इति सिद्धम्. 'च'कारो अधिकरण-सम्पूर्णत्वद्योतकः॥7॥
इति प्रथमाध्याये चतुर्थपादे प्रथमम् सप्तसूत्रात्मकम् आनुमानिकाधिकरणम्॥1॥

## चमसवद् अविशेषात्॥8॥ (1।4।2)

पुनः श्रुत्यन्तरेण प्रत्यवस्थितं निराकर्तुम् अधिकरणान्तरम् आरभते. ननु प्रकरणवशात् पूर्वम् अस्मदुक्तो अर्थो अन्यथा वर्णितः. यत्र प्रकरणापेक्षैव नास्ति मन्त्रे तद् अस्माकं मूलम्. "अजामेकां लोहित-शुक्ल-कृष्णां बह्वीः प्रजाः सृजमानां सरूपाः, अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" (श्वेता.उप.4।5) इति. यद्यपि इदं श्वेताश्वतरोपनिषदि चतुर्थाध्याये विद्यमानत्वात् पूर्वापरसम्बन्धमेव वक्तव्यम्. तत्र, "ब्रह्मवादिनो वदन्ति" (तत्रैव 1।1) इति उपक्रम्य ब्रह्मविद्यैव निरूपिता. तथापि पूर्वकाण्डे

प्रणवादि-मन्त्राणां न अयं नियमइति प्रकृतेऽपि मतान्तरवाचकस्यैव प्रकृतोपयोगः इति शङ्का. "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्" (तत्रैव 1।3) इति च. तथा "ज्ञाज्ञौ द्वावजावीशानीशौ, अजा ह्येका भोक्तृ-भोग्यार्थयुक्ता"(तत्रैव 1।9). अग्रे च "यो योनिं योनिमधितिष्ठत्येको विश्वानि रूपाणी योनीश्च सर्वाः. ऋषिप्रसूतं कपिलं यः तम् अग्रे ज्ञानैः बिभर्ति जायमानञ्च पश्येद्" (तत्रैव 5।2) इत्यादि च वाक्यानि कपिल-तन्मत-वाचकानि वर्तन्तइति साङ्ख्यमतमपि वैदिकमेव इत्येवं प्राप्ते, उच्यते, चमसवदविशेषात्.

"अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः तस्मिन् यशो निहितं विश्वरूपम्, तस्यासते ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदाना" (बृहदा.उप.2।2।3) इति मन्त्रे यथा न विशेषो विधातुं शक्यते, न हि कर्मविशेषं कल्पयित्वा तत्र अर्वाग्बिलचमसं कल्पयित्वा तत्र यशोरूपं सोमं होतारो मन्त्रेण भक्षयेयुः इति कल्पयितुं शक्यते, तथा प्रकृते रोहित-शुक्ल-कृष्ण-शब्देन रजः-सत्त्व-तमांसि कल्पयित्वा न तद्वशेन सर्वमेव मतं शक्यते कल्पयितुम्. कपिलऋषिवाक्यमपि अनित्यसंयोगभयाद् नित्यऋषेरेव अनुवादकम्. तस्माद् न मन्त्रमात्रेण प्रकरण-श्रुत्यन्तरनिरपेक्षेण विशेषः कल्पयितुं शक्यः॥8॥

ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके॥9॥

"ननु चमसमन्त्रे अर्वाग्बिल" (बृहदा.उप.2।2।3) इति मन्त्रव्याख्यानम् अस्ति. "शिरश्चमसः प्राणा वै यशः" (तत्रैव 2।2।3) "प्राणा वा ऋषयः" (तत्रैव 2।2।3) इति. न अत्र तथा व्याख्यानम् अस्तीति इमां शङ्कां परिहरति 'तु'शब्दः. 'अजा'शब्देन ज्योतिरेव उच्यते. यथा हि अजा अल्पदोग्ध्री तथा इयं नश्वरसुखदात्री. अग्नि-सूर्य-सोम-विद्युद्रूपा ब्रह्मणो हंसोक्तचरणरूपा, भगवत्कार्यांशरूपत्वात्('कार्यरूपांशत्वात्' इति पुरु.पाठः). "तासां त्रिवृतं त्रिवृतम् एकैकां करवाणि" (छान्दो.उप.6।3।3) इति श्रुतेश्च प्रथमोत्पन्ना देवता 'अजा'शब्देन उच्यते. तत्र हेतुः उपक्रमात्. अत्रैव उपक्रमे, "तदेवाग्निः तद्वायुः तदादित्यः तदु चन्द्रमाः" (श्वेता.उप.4।2) इति. "द्वा सुपर्णा" (तत्रैव 4।6) इति च अग्रे. मध्ये च अयं मन्त्रः पूर्वोत्तर-सम्बद्धमेव वदति. सा मुख्या सृष्टिः. अजद्वयं जीव-ब्रह्मरूपम् इति. अत्र प्रकरणे न स्पष्टइति निरूपयति. तथाहि, श्रुत्यन्तरे स्पष्टमेव अधीयत एके "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तद् अन्नस्य" (छान्दो.उप.6।4।1) इति. एवम् अग्रेपि कलात्रये. "अनेन जीवेन आत्मना" (तत्रैव 6।3।2) इति जीव-ब्रह्मणोश्च अनुप्रवेशः. बीजेऽपि त्रैविध्यम् इति सरूपत्वम्. भगवतो भोगे हेतुः जीवेन भुक्तभोगाम् इति. तस्मात् प्रकृतेऽपि चमसवत् श्रुतावेव अर्थकथनाद् न सांख्यमतप्रतिपादकत्वम् ॥9॥

कल्पनोपदेशाच्च मध्वादिवदविरोधः॥10॥

ननु द्विविद्या शब्दप्रवृत्तिः. योगो रूढिः वा. तत्र 'अजा'शब्दः छागायां रूढः. न जायते इति योगः. अनुभयरूपत्वात् कथं सृष्टिवाचकत्वम्? इति आशङ्क्य परिहरति

कल्पनोपदेशाच्च. कल्पना अत्र उपदिश्यते.

आद्या सृष्टिः कल्पनया 'अजा'शब्देन उच्यते. यथाहि अजा बर्कर-सहिता सवत्सा स्वामिहिता तथा इयम् इति उपदेशपदात् तथा उपासनम् अभिप्रेतम्. 'च'कारात् परोक्षवादोऽपि देवस्य हिताय. "यथा आदित्यो वै देवमधु" (छान्दो.उप.3।1।1) "वाचं धेनुम् उपासीत" (बृहदा.उप.5।8।1) द्युलोकादीनां च अग्नित्वं पञ्चाग्निविद्यायां तथा प्रकृतेऽपि अविरोधः. योगरूढि-व्यतिरेकेणापि एषा वेदे शब्दप्रवृत्तिः. तस्माद् अजामात्रेण न सांख्यमतसिद्धिः ॥10॥

इति प्रथमाध्याये चतुर्थपादे द्वितीयं त्रिसूत्रं चमसाधिकरणम्॥2॥

## न संख्योपसंग्रहादपि नानाभावाद् अतिरेकाच्च॥11॥(1।4।3)

मन्त्रान्तरेण पुनः आशङ्क्य परिहरति. बृहदारण्यकषष्ठे श्रूयते. "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः, तमेव मन्य आत्मानं विद्वान् ब्रह्माऽमृतोऽमृतम्" (बृहदा.उप.4।4।17) इति. यद्यपि अत्र पञ्चजनाः पञ्च उच्यन्ते, न पञ्चानां पञ्चगुणत्वम्, समासानुपपत्तेः. तथाहि. आद्यः 'पञ्च'शब्दः संख्यावाची, संख्येयवाची वा? आद्ये पञ्चसंख्यायाः एकत्वाद् न षष्ठीसमासः. संख्यायां संख्याभावाच्च. संख्येयपरत्वे द्वीतीयस्य संख्यात्वे पञ्चत्वमेव पूर्ववत् चेद् अनन्वयः, विधायकाभावाच्च. अतो वीप्सा. पञ्चजनसञ्ज्ञाविशिष्टानां वा पञ्चत्वम् इति यथासम्भवम् अर्थः. तथापि मूढग्राहेण संख्योपसङ्ग्रहेऽपि लक्षणार्थं केनचिद् धर्मेण पञ्चसङ्ग्राहकेण भाव्यम्. सच तेषां मते न सम्भवति. तथा सति पञ्चैव तत्त्वानि स्युः. अतः ते नानाभावाएव स्वीकर्तव्याः. यद्यपि भूततन्मात्रा-कूतिचित्त्यन्तःस्थितत्वधर्माः वक्तुं शक्यन्ते तथापि न ते तथा उक्तवन्तः. "मूलप्रकृतिरविकृतिर् महदाद्याः प्रकृतिविकृतयः सप्त, षोडशकश्च विकारो न प्रकृतिर् न विकृतिः पुरुषः" (सांख्यका.3) इति अन्यथा उपगमात्, पुरुषे वैलक्षण्याभावप्रसङ्गश्च. किञ्च न अयं श्रुत्यर्थः इति श्रुतावेव प्रतीयते. अतिरेकाद् "आकाशश्च" (बृहदा.उप.4।4।17) इति. 'च'काराद् आत्मा "यस्मिन्" (तत्रैव 4।4।17) इति अधिकरणत्वेन उक्तः. तस्माद् न अनेनापि मन्त्रेण तन्मतसिद्धिः॥11॥

प्राणादयो वाक्यशेषात्॥12॥

ननु अवश्यं मन्त्रस्य अर्थो वक्तव्यः. तदनुरोधेन लक्षणयापि ज्योतिःशास्त्रवत् 'पञ्च-पञ्च'शब्दः पञ्चविंशतिवाचकतया परिकल्प्यः. स्पष्ट-माहात्म्यार्थम् आत्माकाशयोः आधाराधेयभावः प्रदर्शितः तत्रत्ययोरेव. अतो मन्त्रे तन्मतसिद्धिः इति आशङ्क्य परिहरति प्राणादयः पञ्चजनाः, वाक्यशेषस्य मन्त्रार्थनियामकत्वात्. "प्राणस्य प्राणम् उत चक्षुषः चक्षुः श्रोत्रस्य श्रोत्रम् अन्नस्य अन्नं मनसो मनः" (बृहदा.उप.4।4।18) इति. ननु कथम् अस्य

वाक्यशेषत्वम्? उच्यते. प्राणादयः सञ्ज्ञाशब्दाः करणवाचकाः. ते ज्ञानरूपं वा, क्रियारूपं वा कार्यं जनयन्ति स्वव्यापारेण. तत्र तेषां करणान्तरापेक्षाभावात् प्राणादीनां पुनः प्राणादिमत्त्वं बाधितं स्यात्. भगवतो माहात्म्यविरोधश्च. अतः स्वार्थनिर्वाहार्थम् अन्यार्थो वर्तते पञ्चजनवाक्यस्य च. अतो बुद्धेः पञ्च वृत्तीः जनयन्ति इति प्राणादयः पञ्चजनाः. "संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च, स्वाप इत्युच्यते बुद्धेर् लक्षणं वृत्तितः पृथक्" (भाग.पुरा.3।26।30) इति. तेषां तत्तत्प्रकारकं स्वकार्यजननं न स्वतः किन्तु भगवतः इति द्वयोः एकार्थत्वे सर्वं सङ्गतं स्यात्. खण्डत्वाच्च शेषत्वम्. सर्वप्रवर्तकत्वाद् भगवतो न माहात्म्य-विरोधः. तत्र 'प्राण'शब्देन त्वग्-घ्राण-प्राणाः गृहीताः. रसना च अन्ने प्रतिष्ठितेति अन्नं गृहीतम्. वाक् वा तेजसि. अत्ता च अन्नं च एकत्र भवतः. सहभावित्वात् क्वचिद् एकग्रहणं, क्वचिद् उभयग्रहणम् इति. तेन एते सर्वे पञ्चैव भवन्ति अतिरिच्यते परमाकाशः. तस्मात् प्राणादयएव पञ्चजनाइति न तन्मतसिद्धिः॥12॥

ज्योतिषा एकेषाम् असत्यन्ने॥13॥

काण्वपाठे "अन्नस्य अन्नम्" (बृहदा.उप.4।4।18) इति नास्ति, तदा कथं पञ्च? तत्र आह ज्योतिषा सङ्ख्यापूर्तिः तेषाम्. "यस्माद् अर्वाक् संवत्सरः" (तत्रैव 4।4।16) इति पूर्वपठितो मन्त्रः. तत्र "तद्देवा ज्योतिषां ज्योतिः" (तत्रैव 4।4।16) इति. अन्नस्थाने ज्योतिः ग्राह्यम्. व्याख्यानं पूर्वमेव. तस्मात् सिद्धं न ('न' इति पुरु.पाठे नास्ति) तन्मतस्य श्रुतिमूलत्वम्॥13॥

इति प्रथमाध्यायचतुर्थपादे तृतीयं त्रिसूत्रं न सङ्ख्योपसङ्ग्रहाधिकरणम्॥3॥

## कारणत्वेन च आकाशादिषु यथाव्यपदिष्टोक्तेः॥14॥ (1।4।4)

श्रुतेः विप्रतिषेधात् स्मृतिरेव ग्राह्या इति मतं दूरीकर्तुं श्रुति-विप्रतिषेधो नास्ति इति अधिकरणम् आरभते. तत्र श्रुतौ सृष्टिभेदा बहवः. क्वचिद् आकाशादिका. "आत्मन आकाशः सम्भूतः" (तैत्ति.उप.2।1) इति. क्वचित् तेजःप्रभृतिका. "तत् तेजो असृजत" (छान्दो.उप.6।2।3) इति. क्वचिद् अन्यथैव. "एतस्माज् जायते प्राण" (मुण्ड.उप.5।1।3) इति, "इदं सर्वम् असृजत" (बृहदा.उप.1।2।5) इति च. एवं क्रमव्युत्क्रमानेकविध-सृष्टिप्रतिपादकत्वाद् वस्तुनो द्वैरूप्यासम्भवाद्, "ग्रहान्त्वा अनु प्रजा पशवः प्रजायन्ते" (तैत्ति.संहि.6।5।10।1) इतिवत् सृष्टिवाक्यानाम्("...वाक्यानि" इति पुरु.पाठः.) अर्थवादत्वेन ब्रह्मस्वरूपज्ञानार्थत्वाद् अध्यारोपापवादन्यायेन न वेदाद् ब्रह्मणः कारणत्वं सिद्ध्यति. अतः परिदृश्यमानजगतः कारणान्वेषणे क्रियमाणे बाह्याबाह्यमतभेदेषु सत्सु कपिलस्य भगवज्ज्ञानांशावतारत्वात् तन्मतप्रकारेणैव जगद्व्यवस्था उचिता इति एवं प्राप्ते, उच्यते. न सृष्टिभेदेषु ब्रह्मणः कारणत्वे विप्रतिपत्तिः, सर्वप्रकारेषु तस्यैव कारणत्वोक्तेः. आकाशादिषु

कारणत्वेन ब्रह्म यथा व्यपदिष्टमेव एकत्र, अन्यत्रापि तदेव कारणत्वेन उक्तम्. "न तस्य कार्यं करणञ्च विद्यते"(श्वेता.उप.6।8) इत्यादिनिराकरणन्तु लौकिककर्तृत्व-निषेधपरम्, तस्यैव प्रतीतेः. सर्ववैलक्षण्यार्थं वैदिकानाम् अबाधितार्थैक-वाक्यत्वस्य अभिप्रेतत्वाद् इति 'च'कारार्थः. कार्यप्रकारे भेदस्तु माहात्म्यज्ञापको नतु बाधकः. बहुधाकृतिसामर्थ्यं लोकेऽपि माहात्म्यसूचकम् इति. तस्माद् न श्रुतिविप्रतिषेधात् स्मृतिपरिग्रहः इति सिद्धम्॥14॥
इति प्रथमाध्याये चतुर्थपादे एकसूत्रं यथा व्यपदिष्टाधिकरणं चतुर्थम्॥4॥

## समाकर्षात्॥15॥ (1।4।5)

पुनः अन्यथा आशङ्क्य परिहरति. ननु क्वचिद्
"असद् वा इदमग्र आसीत्" (तैत्ति.उप.2।7) इति, क्वचित्
"सदेव सौम्येदमग्र आसीत्. तद्धैक आहुः असदेव इदम् अग्र आसीत्" (छान्दो.उप.6।2।1),
"अव्याकृतम् आसीत्" (ब्रहदा.उप.1।4।3),
"न असद् आसीद् नो सद् आसीद्" (तैत्ति.ब्राह्म.2।8।9।3)
"तम् आसीत्" (तैत्ति.ब्राह्म.2।8।9।4)
इत्यादिवाक्येषु ब्रह्मणोऽपि विगानं श्रूयते. "तद्धैक आहुः" (छान्दो. उप.6।2।1) इतिवत् ('इतिकर्मवत्' इति पुरुपाठः.) पक्षान्तरं सम्भवति. नहि 'असत्'-'तमस्'शब्दैः ब्रह्म प्रतिपादयितुं शक्यते. "असन्नेव स भवति" (तैत्ति. उप.2।6) इति बाधात्. "आदित्यवर्णं तमसः परस्ताद्" (श्वेता.उप.3।8) इति च. तस्मात् कारणत्वेनापि श्रुतिविप्रतिषेधाद् ब्रह्म कारणं न इत्येवं प्राप्ते, उच्यते समाकर्षात्. आकृष्यते स्वस्थानात् च्याव्यत इति आकर्षः. सर्वेषु एतेषु वाक्येषु 'असदा'दिपदानां न निरात्मकत्वाद्यर्था उच्यन्ते किन्तु वैलक्षण्येन. सर्वशब्दवाच्यत्वं च सिद्धं ब्रह्मणः. यथा,
"को अद्धा वेद? क इह प्रावोचत्" (तैत्ति.ब्राह्म.2।8।9।5),
"सर्वे वेदा यत् पदम् आमनन्ति" (कठोप.1।2।15),
"यतो वाचो निवर्तन्ते"(तैत्ति.उप.2।9),
"मनसैवानुद्रष्टव्यम्"(बृहदा.उप.4।4।19)

इत्यादि सर्वे विरुद्धधर्माः भगवति उच्यन्ते. एवम् अनेकविरुद्धशब्द-वाच्यत्वं लोकप्रसिद्धतादृशार्थात् समाकर्षाद् अवगम्यते. "तं यथा यथोपासते तथा भवति" (मुद्ग.उप.3।1) इति फलज्ञापनार्थम् "असन्नेव स भवति" (तैत्ति.उप.2।6) इति यथा कंसादीनां मारकः. "तद्धैक आहुः" (छान्दो.उप. 6।2।1) इत्यत्र सर्वप्रपञ्चवैलक्षण्यम्. प्रपञ्चरूपोऽपि स इति प्रथमः पक्षः. अव्याकृतम् (बृहदा.उप.1।4।7) असत्पक्षेण तुल्यम्. "न असद् आसीत्" (तैत्ति.ब्राह्म.2।8।9।3) इति मनः तदपि ब्रह्म, "तम आसीद्"

(तैत्ति.ब्राह्म.2।8।9।4) इति अनभिव्यक्तं, कर्मणोऽपि भगवत्वात्. पूर्वकाण्डेऽपि(तैत्ति.ब्राह्म.2।1।2) तस्मादेव सृष्टिः. नहि तमस्तः स्वेन गूढत्वं लोके सम्भवति. अतः क्वचिद् विलक्षणात् क्वचिद् अविलक्षणाद् ब्रह्मणो जगत्. भगवत्त्वादेव स्वयं कर्तृकता च. सम्भवति च एकवाक्यत्वे अज्ञानाद् निराकरणं च अयुक्तम्. तस्मात् शब्दवैलक्षण्येन श्रुतिविप्रतिषेधो वक्तुं न शक्यः इति सिद्धम्॥15॥
इति प्रथमाध्यायचतुर्थपादे पञ्चमं समाकर्षाधिकरणम्॥5॥

## जगद्वाचित्वात्॥16॥ (1।4।6)

एवं शब्दविप्रतिषेधं परिहृत्य अर्थविप्रतिषेधं परिहरति. कौषीतकि-ब्राह्मणे बालाक्यजातशत्रुसंवादे बालाकिः अजातशत्रवे ब्रह्मोपदेष्टुम् आगतः. आदित्यादिदक्षिणेक्षिपुरुषपर्यन्तं (कौषि.ब्राह्म.4।2-16,17) परिच्छिन्न-ब्रह्मोपासनानि उक्त्वा तथा निराकृते तमेव ज्ञानार्थम् उपससाद(तत्रैव 4।18). ततः सुप्तपुरुषसमीपम् उभौ आगत्य ब्रह्मवाद्यं चक्रतुः.

तत्र "क्व एष एतद् बालाके पुरुषोऽशयिष्टः" (कौषि.उप.4।19) इत्यादौ जीवः प्रक्रान्तः. तस्मादेव सर्वोत्पत्तिः उक्ता. ब्रह्मणोऽपि अनुप्रवेशश्च. तत्र सन्देहः : जीवएव ब्रह्मसहितः कर्ता ब्रह्मैव वा? इति. तत्र जीवएव कर्ता, सर्वस्य जगतो ब्रह्मत्वादयः तस्य धर्मा राजत्ववद् यजमानत्ववद् वा. अस्मिन् प्रकरणे ब्रह्मोपक्रमेण जीवपर्यवसानोक्तेः. सर्वत्रैव ब्रह्मत्वेन उक्तो जीवएव कर्ता. तथा सति लोकेऽपि जीवकर्तृत्वं सहजं भवेत्, बन्ध-मोक्षव्यवस्था च. एवं सति अर्थात् प्रकृतेरेव फलिष्यति इत्येवं प्राप्ते, उच्यते जगद्वाचित्वात्. "एतेषां पुरुषाणां कर्ता यस्य चैतत् कर्म" (कौषी.उप.4।18) इति उपक्रमे 'एतत्'शब्देन जगद् उच्यते, 'पुरुष'शब्देन च जीवः. तद् जडजीवात्मकं जगत् ब्रह्मकर्तृकम् इति हि पूर्वसिद्धम्. तदनुरोधेन अत्रापि ब्रह्मपरत्वमेव उचितं, नतु सर्वविप्लवो अश्रुतकल्पना च. अतः सुषुप्तावपि ब्रह्मण्येव लयः तस्मादेव सर्वम् इति ज्ञातव्यम्. 'प्राणात्म'शब्दवाच्यत्वन्तु पूर्वमेव सिद्धम्. तस्माद् न जीवाधिष्ठिता प्रकृतिः कारणम्॥16॥

जीवमुख्यप्राणलिङ्गाद् इति चेत् तदव्याख्यातम्॥17॥

किञ्चिद् आशङ्क्य परिहरति. ननु अत्र जीवएव प्रक्रान्तः. "क्वैषः एतद् बालाके पुरुषोऽशयिष्टः" (कौषी.उप.4।19) इति. ब्रह्मतु अद्यापि न सिद्धम् एतादृशं, न एतादृशम् इति. अतः शयनोत्थानलक्षण-जीवधर्मदर्शनात् तस्यैव ब्रह्मत्वं जगत्कर्तृत्वं च. तत् स्वतो अनुपपन्नं प्रकृतौ फलिष्यति. अथवा मुख्यप्राणलिङ्गमपि अत्र अस्ति. "प्राण एवैकधा भवति" (तत्रैव 4।19) इति. सुषुप्तौ तस्यैव वृत्तिः उपलभ्यते. विद्यमानादेव सर्वोत्पत्ति-प्रलयौ. सच प्रकृत्यंशो अतो जडादेव प्रधानात् सृष्टावपि सर्वोत्पत्तिः. अतो अस्मात् प्रकरणाद्

जीवद्वारा साक्षाद् वा प्रकृतेः कारणत्वम् इत्येवं प्राप्ते, उच्यते तदव्याख्यातम्. एतयोः उभयलिङ्गत्वमेव नास्ति इति "आश्रितत्वाद् इह तद्योगाद्" (ब्रह्मसू.1।1।30) इत्यत्र सर्वमेव कार्यं भगवतएव न अन्यस्माद् इति. अतो अस्माद् ब्रह्मवादएव सिद्ध्यति, न प्रकृतिवादः॥ 17॥

अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके॥18॥

स्वमतेन परिहारम् उक्त्वा नियतधर्मवादेनापि परिहारम् आह. स्वाप-प्रतिबोधौ जीवधर्माविव. चक्षुरादिलयाधारत्वं प्राणस्य इति. तस्मिन्नपि पक्षे अन्यार्थं तद्धर्मकीर्तनम्. भेदे हि तन्निराकरणम् अवश्यं कर्तव्यमिति 'तु'शब्दः. ब्रह्मप्रतिपत्यर्थमेव जीवलयोद्गमौ. मृतिवैलक्षण्येन प्राणकीर्तनम् आश्रयब्रह्मबोधाय. कुतः एतद् अवगम्यते? तत्र आह, उपक्रमोपसंहाराभ्यामेव अवगम्यते. "यो वै बालाक एतेषां पुरुषाणाम्" (कौषी.ब्राह्म.4।18) इति उपक्रमे मुख्यं ब्रह्मैव निर्दिष्टम्. तज्ज्ञानेन असुरजयः, सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यम् आधिपत्यं च इति फलम्. नहि एतद्द्वयम् अमुख्ये सम्भवति, अपिच प्रश्नव्याख्यानाभ्याम्. "क्वैष एतद् बालाके पुरुषोऽशयिष्ट" (तत्रैव 4।18) इति प्रश्नः. तत्र जीवस्य ज्ञातत्वाद् अधिकरणमेव न ज्ञातम्. "यत्रैष एतद् बालाके पुरुषोऽशयिष्ट" (तत्रैव 4।19) इति व्याख्यानम्. न हि नाडीः ज्ञापयितुं व्याख्याति, किन्तु प्रतिज्ञातं ब्रह्म. कथम् एतद् अवगम्यते, नाडीव्यतिरिक्तः आत्मा ज्ञाप्यते? इति. तत्र आह एवम् एके. एके शाखिनो वाजसनेयिनः. तत्रापि दृप्तबालाकिब्राह्मणे "स होवाच अजातशत्रुः यत्रैषः एतत् सुप्तो अभूत् य एष विज्ञानमयः पुरुषः तदेषां प्राणानां विज्ञानेन विज्ञानम् आदाय, य एषोन्तर्हृदय आकाशः तस्मिन् शेते" (बृहदा.उप.2।1।17) इत्यत्र 'आकाश'शब्दं ब्रह्म. "सता सौम्य तदा सम्पन्नो भवति" (छान्दो.उप.6।8।1) इति च. "स्वं ह्यपीतो भवति" (तत्रैव 6।8।1) इति च. तस्माद् आधारभूत-ब्रह्मज्ञापनार्थत्वाद् जीवमुख्यप्राणलिङ्गात् प्रकृतिवादः इति असङ्गतम्॥18॥
इति प्रथमाध्यायः चतुर्थपादे षष्ठं त्रिसूत्रं जगद्वाचित्वाधिकरणम्॥6॥

## वाक्यान्वयात्॥19॥ (1।4।7)

पुनः जीवब्रह्मवादेन प्रकृतिकारणवादम् आशङ्क्य निराकरोति. बृहदारण्यके चतुर्थे षष्ठे च याज्ञवल्क्य-मैत्रेयीसंवादे, "येनाहं नामृता स्यां किमहं तेन कुर्याम्" (बृहदा.उप.4।5।4) इति विरक्तिम् उक्त्वा, "यदेव भगवान् वेद तदेव मे ब्रूहि" (तत्रैव 4।5। 4) इति पृष्टे ताम् अभिमुखीकृत्य, "न वा अरे पत्युः कामाय" (तत्रैव 4।5।6) इत्यादिना अमृतत्वाय ज्ञानम् उपदिशति षष्ठे. पुनः उपसंहारेऽपि "एतावद् अरे खलु अमृतत्वम् इति होक्त्वा याज्ञवल्क्यः प्रवव्राज" (तत्रैव 4।5।15) इति.

तत्र जीवस्य प्रकरणित्वं ब्रह्मणो वा? इति संशयः. तत्र आत्मनः प्रियत्वं स्वप्रतीत्या पुत्राद्यपेक्षया बोधयन् जीवमेव उपक्रमे आत्मत्वेन वदति. तदनु तत्र दर्शनादिः विधत्ते. तेन सर्वं विदितम् इति फलम् आह. तत्र कथम् आत्मज्ञानेन सर्वज्ञानम्? इति आकांक्षायां, "ब्रह्म तं परादाद्" (बृहदा.उप.4।5।7) इत्यादिना, "इदं सर्वं यद् अयम् आत्मा" (तत्रैव 4।5।7) इत्यन्तेन तस्यैव सर्वत्वम् आह.

तदनु कथम् अस्मिन् सङ्घाते आत्मज्ञानं भवति? इति आकाङ्क्षायां दुन्दुभ्यादिदृष्टान्तत्रयम् आह परम्परया बाह्याभ्यन्तर्भेदेन. यथा महाकोलाहले दुन्दुभेः हन्यमानस्य शब्दो गृहीतो भवति, तत्र करणं दुन्दुभिदर्शनं दुन्दुभ्याघात-दर्शनं वा. अनुमानद्वारा चित्ते तत्र निविष्टे तत्साक्षात्कारो भवति इति. तथा आत्मनो बोधककार्यानुसन्धाने तत्साक्षात्कारो भवति इति. तत्र कथं सर्वत्वम्? इति आकांक्षायां ततएव उत्पन्नं सर्वं नामरूपात्मकं तस्मिन्नेव लीयते इति "स यथा" (बृहदा.उप.4।5।11-12) इतिद्वयेन आह. मध्येऽपि सएव न अतिरिक्तं विशतीति, "स यथा सैन्धवघन" (तत्रैव 4।5।13) इत्यनेन आह. आधेयत्वेन तावन्मात्रतानिराकरणाय आह "न प्रेत्य सञ्ज्ञास्ति" (तत्रैव 4।5।13) इति. कार्यातिरिक्तरूपं कथयितुं न शक्यते इति तत्र विशेषाकाङ्क्षायाम् अतिरिक्ता-कथने वञ्चकत्वम् आशङ्क्य तत्परिहाराय आह "स होवाच" (तत्रैव 4।5।14) इति. "अविनाशी"(तत्रैव) इत्यनेन कार्यवैलक्षण्यं सिद्धवत्कारेण उक्त्वा विषयसम्बन्धेन संसारम् आह "मात्रासंसर्गस्त्वस्य भवति"(तत्रैव) इति. विशेषतस्तु अकथने हेतुम् आह "यत्र द्वैतम्" (तत्रैव 4।5।15) इत्यादिना यावत् समाप्ति. चक्षू रूपमेव पश्यति, न आत्मानम्.

ननु रूपमपि आत्मा इति चेत्, "तत्रापश्यन् वै तद् द्रष्टव्यत्वेन न पश्यति"(तत्रैव 4।5।14). न हि द्रष्टृस्वरूपं दृश्यज्ञानेन ज्ञातं भवति, अतद्रूपत्वात्. एवं द्रष्टृ-दृश्यव्यवहारे अज्ञानावस्थायां विशेषतः तज्ज्ञानम् अशक्यम् उक्त्वा ज्ञानोत्तरं कर्मकर्तृभावएव नास्ति इति आह "यत्र वा अन्यदिव स्याद्" (तत्रैव 4।5।15) इत्यादिना. इदमेव हि ज्ञानम् अमृतत्वम् इति.

तत्र आदिमध्यवसानेषु जीवप्रकरणम् इत्येव प्रतिभाति. तस्य ब्रह्मता जगत्कर्तृत्वम् इति उत्कर्षः. नतु तस्माद् अन्यद् ब्रह्मत्वेन वक्तुं युक्तम्, अर्थविरोधाच्च. तस्माद् वेदे सृष्टिवाक्यानाम् एतन्न्यायेन अन्यार्थत्वाद् न ब्रह्म जगत्कारणमिति प्रकृतिवादएव युक्तः इत्येवं प्राप्ते उच्यते वाक्यान्वयात्. इदं वाक्यं भगवत्येव अन्वेति, न अत्र जीवप्राधान्यगन्धोऽपि. सर्वत्र भगवदन्वयेनैव जीवस्यापि प्रियत्वं, तस्यैव सुखरूपत्वात्. सर्वोपनिषदनुरोधेनैव अस्यापि अर्थस्य वक्तुम् उचितत्वात्. "तमेव विदित्वा अतिमृत्युमेति" (श्वेता.उप.3।8), "आन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" (तैत्ति.उप.3।6), "सर्वएव आत्मानो व्युच्चरन्ति" (बृहदा.उप.2।1।20) "एष ह्येवानन्दयाति" (तैत्ति. उप.2।7) इत्यादिश्रुतिसहस्रैः निःसन्दिग्धैः ब्रह्मणः स्वरूपं कार्यम् अंशाश्च प्रतिपादिताइति इदमपि वाक्यं तत्परमेव उचितं, सर्वव्यवहारस्य तन्मूलकत्वेन पूर्वम् उक्तत्वात्. विषयस्पर्शो

विज्ञातृत्वमपि तस्यैव. एवं सति सर्वमेव सङ्गतं भवेत्. अतो वाक्यान्वयाद् न जीवपरत्वं येन प्रकृतिवादः स्याद् इति॥19॥

प्रतिज्ञासिद्धेर्लिङ्गम् आश्मरथ्यः॥20॥

नियतधर्मवादिनामपि मतेन प्रकृते सिद्धान्तं वक्तुं पक्षान्तराणि आह. तत्र ब्रह्मवादैकदेशिवादाः सन्ति. तत्र जीवो नाम स्वस्य भोगनिष्पत्त्यर्थं स्वांशो भगवता कृतो विस्फुलिङ्गवद् इति आश्मरथ्यो मन्यते. अनादिसिद्धएव जीवः चैतन्यमात्रं शरीरादिसङ्घाते प्रविष्टइति चिति तन्मात्रेण प्रवेशे च मोक्षः इति च औडुलोमिः आचार्यः. काशकृत्स्नस्तु आसक्त्या विषयभोक्तृरूपं भगवतएव जीवः इति. तेऽपि स्वमतानुसारेण अत्र परिहरन्ति. तत्र पुत्रादिप्रियसहवचनाद् जीवप्रकरणमेव एतद् इति आशङ्क्य जीवोपक्रमस्य अन्यत् प्रयोजनम् इति आह. प्रतिज्ञासिद्धेः इति षष्ठी. तस्याः लिङ्गम् अंशत्वाद् जीवस्य तदभेदेन उपक्रमः प्रतिज्ञासिद्धेः लिङ्गं भवति. एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञा. तस्यैव अग्रे व्युत्पाद्यमानत्वात्. तस्याः एतत् साधकम्. यथा जीवो भगवान् एवं जड इति. एवम् आश्मरथ्यो मन्यते. श्रोतव्यादिविषयस्तु भगवानेव. तस्माद् नियतधर्मजीववादेऽपि न जीवोपक्रमो दोषः॥20॥

उत्क्रमिष्यत एवम्भावाद् इति औडुलोमिः॥21॥

'लिङ्गम्' इति अनुवर्तते. यद् अत्र जीवोपक्रमेण भगवतः श्रवणादिकम् उक्तं तत् संसारभावाद् उत्क्रमिष्यतो जीवस्य लिङ्गम्. मुक्तौ जीवो भगवानेव भविष्यति इति ज्ञापकम्. अन्यथा सैव कथम् अमृता भवेद्? इति. 'इति'शब्दो हेतौ. स्त्रिया विश्वासार्थं गौणप्रिय-वैराग्यार्थं च जीवोपक्रमः कर्तव्यएव इति औडुलोमिः आचार्यो मन्यते. तस्माद् भिन्नजीवपक्षेऽपि न अत्र दूषणम्॥21॥

अवस्थितेरिति काशकृत्स्नः॥22॥

लिङ्गम् इत्येव. भगवतएव अवस्था जीवः इति. अतः संसारदशायामपि जीवो ब्रह्मइति न अत्र उत्क्रमणम् उपचारो वा. अन्यथा कथम् "आत्मनस्तु कामाय सर्वं प्रियं भवति" (बृहदा.उप.4।5।6) इति. न हि अन्यस्य सर्वं प्रियं भवति. मोक्षस्तु ज्ञानमेव, उत्तरत्र कर्तव्याभावात्. अवस्थया व्यवसायात् सिद्धान्ताद् विशेषः. इति शब्देन "एतावद् अरे खलु अमृतत्वम्" (तत्रैव 4।5।15) इति उपसंहारो हेतुः अस्य पक्षस्य इति काशकृत्स्नो मन्यते. तस्माद् जीवोपक्रमो, भगवतएव अवस्थाविशेषो जीवः इत्यस्य पक्षस्य लिङ्गम्. तस्मात् मैत्रेयीब्राह्मणेनापि जीवद्वारा प्रकृतिकारणवादासिद्धिः इति सिद्धम्॥23॥

इति प्रथमाध्याये चतुर्थपादे सप्तमं वाक्यान्वयाधिकरणम्॥7॥

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्॥23॥ (1।4।8)

एवं प्रकृतिकारणवादनिराकरणेन ब्रह्मणएव कारणत्वे सिद्धेऽपि अर्धजरतीयतया उभयस्थानपक्षं परिहर्तुम् अधिकरणम् आरभते.

ननु ब्रह्मकारणतां न निराकुर्मः, श्रुतिसिद्धत्वात् किन्तु समवायिकारणं प्रकृतिरेव, कार्यकारणयोः अवैलक्षण्यात्. समवायिकारणानुरोधि हि कार्यम्. अन्यत् सर्वं भगवान् अस्तु. अपेक्ष्यते च समवायि-निमित्तयोः भेदः. कर्मण्यपि श्रुति-स्मृतिसमवायो धर्मे. एवं ब्रह्मवादेऽपि स्मृत्युक्ता प्रकृतिः समवायिकारणं, ब्रह्म निमित्तकारणम् इत्येवं प्राप्ते उच्यते. प्रकृतिश्च निमित्तकारणं, समवायिकारणञ्च ब्रह्मैव. 'प्रकृति'पदप्रयोगात् स्मृतिसिद्ध-तृतीयसर्वधर्मापदेशः. 'च'काराद् "यत्र" (भाग.पुरा.10।85।4) इत्यादि सर्वसङ्ग्रहः. कुतः एतत्? प्रतिज्ञादृष्टान्तानुपरोधात्. प्रतिज्ञा "अपि वा तमादेशम् अप्राक्षो येन अश्रुतं श्रुतं भवति अमतं मतं भवति अविज्ञातं विज्ञातं भवति" (छान्दो.उप.6।1।2) इति. दृष्टान्तो "यथा एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" (छान्दो. उप.6।1।4) इत्यादि. प्रतिज्ञा-दृष्टान्तयोः अनुपरोधः अबाधनं, तस्मात्. समवायिकारणज्ञानेन हि कार्यज्ञानम्. उभयोः ग्रहणम् उपचार-व्यावृत्त्यर्थम्, उपक्रमोपसंहारवत्. प्रतिज्ञामात्रत्वे अदृष्टद्वारापि भवेत्. दृष्टान्तमात्रत्वेतु अनुमानविधया स्यात्. तथा सति सर्वसमानधर्मवद् ब्रह्म स्याद् न समवायिकारणम्. उभयोः ग्रहणेतु प्रतिज्ञायाः दृष्टमेव द्वारम् इति समवायित्वसिद्धिः.

कार्यकारणयोः भेदाभेदमतनिराकरणाय पिण्डमणिनखनिकृन्तनग्रहणम्. तथा सति यत्र क्वचिद् भगवान् ज्ञातः सर्वत्र ज्ञातो भवति. सर्वं च ज्ञातं भवति इति सामान्यलक्षणप्रत्यासत्तिनिराकरणाय च, "वाचारम्भणं विकारो नामधेयम्" (छान्दो.उप.6।1।4) इति. अलीकत्वनिराकरणाय च "मृत्तिकेत्येव सत्यम्" (तत्रैव) इति. ब्रह्मत्वेनैव जगतः सत्यत्वं, न अन्यथा इति.

सामान्यलक्षणप्रत्यासत्तिनिराकरणं च स्पष्टमेव अग्रे "त्रीणि रूपाणि" (छान्दो.उप.6।1।4-6) इत्यत्र करिष्यति. अतो ब्रह्मरूपेण सत्यस्य जगतो ब्रह्मैव समवायिकारणम्. देहात्मबुद्धिस्तु सत्यां विकारबुद्धौ दोषः. श्रुतिसामर्थ्यं प्रमाणम् इति उक्तम्. तस्माद् ब्रह्मैव समवायिकारणं, न प्रकृतिः॥23॥

अभिध्योपदेशाच्च॥24॥

लिङ्गान्तरम् आह "सो अकामयत बहु स्यां प्रजायेय" (तैत्ति.उप.2।6) इत्यत्र कामनं तस्य अभिध्यानम्. आप्तकामत्वाद् न कामना. तदभिध्यानं सृष्टौ उपदिश्यते "बहु स्याम्" इति. स्वस्यैव बहुरूपत्वाभिध्यानेन सृष्टं स्वयमेव भवति. सुवर्णस्य अनेकरूपत्वं सुर्वणप्रकृतिकत्वएव. अध्यासाभावाद् गौणत्वापत्तेश्च. न हि मुख्यं बहुभवनं योगिनां सम्भवति. सर्वभवनसामर्थ्यात् मुख्ये सम्भवति गौणकल्पनायाः अन्याय्यत्वात्. 'च'कारात्,

“इदं सर्वं यद् अयम् आत्मा” (बृहदा.उप.2।4।6) इति कार्यस्य ब्रह्मत्वश्रुतिः ब्रह्मप्रकृतित्वे सम्भवति, न अन्यथा.

अथवा “सर्वं खल्विदं ब्रह्म तज्जलान् इति शान्त उपासीत” (छान्दो. उप.3।14।1) इति तस्य जगद्रूपत्वेन अभिध्यानम् उपदिश्यते. तद् ब्रह्मसमवायित्वे घटत इति. ‘च’काराद् “एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम्” (भग.गीता 9।15) इति ॥24॥

साक्षाच्च उभयाम्नानात्॥25॥

लिङ्गम् उक्त्वा श्रुतिमेव प्रमाणम् आह. साक्षात् श्रुत्यैव समवायित्वम् उच्यते. ‘च’कारात् स्मृत्यापि. कथं श्रुत्या उच्यते? तत्र आह उभयाम्नानात्. ब्रह्मणः सकाशाद् ब्रह्मण्येव च सृष्टि-प्रलययोः आम्नानात्. “सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्ति” (छान्दो. उप.1।9।1) इति. “अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा” (भग.गीता 7।6) इति च. न हि एतस्मिन् निमित्तत्वे सम्भवति. सुवर्णादिषु तथा उपलब्धेः. लोकवेदन्यायेन साक्षात्त्वम्. तस्माद् भगवानेव समवायिकारणम् ॥25॥

आत्मकृतेः परिणामात्॥26॥

ननु “सएव सर्वं सृजति सएवावति हन्ति च” (भाग.पुरा.4।11।25) इति कर्तृत्वप्रतीतेः आकाशादिवाक्यमपि औपचारिकं भविष्यतीति तन्निराकरणाय आह आत्मकृतेः. “तदात्मानं स्वयम् अकुरुत” (तैत्ति.उप. 2।7) इति स्वस्यैव कर्मकर्तृभावात्. सुकृतत्ववचनाच्च अलौकिकत्वम्. तथापि ज्ञानार्थम् उपपत्तिम् आह परिणामात्. परिणमते कार्याकारेण इति. अविकृतमेव परिणमते सुवर्णम्. सर्वाणि च तैजसानि. वृद्धेश्च अलौकिकत्वाद् ब्रह्मकारणत्वएव घटते पूर्वावस्थान्यथाभावस्तु कार्यश्रुत्यनुरोधाद् अङ्गीकर्तव्यः. वक्ष्यति च, “श्रुतेस्तु शब्दमूलत्वाद्” (ब्रह्मसू.2।1।27) इति. अन्यानि च युक्तिदूषणानि परिहरिष्यति. तस्माद् ब्रह्मपरिणामलक्षणं कार्यम् इति जगत्समवायिकारणत्वं ब्रह्मणएव इति सिद्धम्॥26॥

योनिश्च हि गीयते॥27॥

चेतनेषु किञ्चिद् आशङ्क्य परिहरति. ननु अस्तु जडानां ब्रह्मैककारणत्वम्. चेतनेषुतु योनि-बीजयोः समवायित्वदर्शनात् पुरुषत्वात् भगवतो योनिरूपा प्रकृतिः समवायिकारणं भवतु. शुक्र-शोणितसमवेतत्वात् शरीरस्य इति आशङ्क्य परिहरति योनिश्च ब्रह्मैव. शाक्तवादनिराकरणाय ‘च’कारः. तत्र युक्ति-श्रुती प्रमाणयति हि गीयते इति. युक्तिः तावत् “सदेव सौम्य इदम् अग्र आसीद् एकमेवाद्वितीयम्” (छान्दो.उप.6।2।1) इति पूर्वम् एकमेव प्रतिज्ञातम्. ‘आकाशादेव’, ‘आनन्दाद्ध्येव’ इत्याद्येवकारैश्च अनन्यकारणत्वं जगतो अवगम्यते. इतरापेक्षायां द्वैतापत्तेः. गीयते च

“कर्तारमीशं पुरुषं ब्रह्मयोनिम्” (मुण्ड.उप.3।1।3)
“यद्भूतयोनिं परिपश्यन्ति धीराः” (मुण्ड.उप.1।1।6) इति च
“मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्”

(भग.गीता1।4।3) इति.

“तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता” (भग.गीता14।4)

इति च. अक्षरपुरुषोत्तमभावेन तथात्वम्. तस्माद् योनिरपि भगवान् पुरुषोऽपि सर्वं वीर्यं जीवश्च सर्वं भगवान् इति. “इदं सर्वं यद् अयम् आत्मा” (बृहदा. उप.4।2।6) इति सिद्धम्. तस्मात् केनापि अंशेन प्रकृतिप्रवेशो नास्ति इति अशब्दत्वं साङ्ख्यमतस्य सिद्धम्॥ 27॥

इति प्रथमाध्यायस्य चतुर्थपादे अष्टमं पञ्चसूत्रं प्रकृत्यधिकरणम्॥8॥

## एतेन सर्वे व्याख्याता व्याख्याताः॥28॥ (1।4।9)

ब्रह्मवादव्यतिरिक्ताः सर्वे वादाः अवैदिकाः वेदविरुद्धाश्च इति आह. एतेन ब्रह्मवादस्थापनपूर्वक-सांख्यमतनिराकरणेन सर्वे पातञ्जलादिवादाः व्याख्याताः, अवैदिकाः अनुपयुक्ताश्च. वैदिकानां हि वेदः प्रमाणम्. तस्मिन् अव्याकुले भ्रान्तिप्रतिपन्नाएव सर्वे वादा इति. एतत्सौकर्यार्थं विस्तारेण अग्रे वक्ष्यते. आवृत्तिः अध्यायसमाप्तिबोधिका॥28॥
इति प्रथमाध्याय चतुर्थपादे नवमम् एकसूत्रं व्याख्यानाधिकरणम्॥9॥
इति श्रीवेदव्यासमतवर्ति-श्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये
प्रथमाध्यायस्य चतुर्थः पादः॥1॥4॥

॥प्रथमो अध्यायः समाप्तः॥